धावन् खेलने
गायन् ह्लादने....

# हर्षस्य वर्धने
# अस्त्येव हस्ते फन्बैट ।




काम्को प्रदत्त फन्बैट ।

क्रीम्पूरित स्वादिष्ट चाक्लेट
अन्तस्थो चटचटायमान वेफर
तदावृत्य मधुरतम चाक्लेट ।

अधिकाधिकं कोलाहल प्रोत्साहाय च ।

काम्को लिमिटेड, मङ्गलूर ।

भारतस्य अतिविस्तृत, अतिनवीन। कार्मिकस्थानस्य प्रदानम् ।

Other Campco chocolates: Milk / White / Treat / TURBO / Eclairs / megabite / Playtime / RUBIES / TOFFEE / Campco beverages: WINNER / COCOA

R K SWAMY/CL/7804/SN

# कोऽयं नूतनः बालः?

| | |
|---|---|
| कण्णन् - अये, कोऽयं नूतनः बालः? | I say, who is this boy? |
| रामन् - एषः मम भगिनीपुत्रः। परह्यः अत्र आगतः। | He is my sister's son. He arrived day before yesterday |
| क - भगिनी अपि आगता अस्ति वा? | Is your sister also here? |
| रा - आम्। भगिनी, आवुत्तः उभौ अपि आगतौ स्तः। | Yes, both my sister and brother-in-law have come. |
| क - कुत्र तौ? न दृश्येते! | Where are they? I haven't seen them? |
| रा - तौ तु नगरदर्शनार्थं मम अनुजेन सह गतवन्तौ। | They have gone out with my brother for sightseeing. |
| क - एषः बालः न नीतः वा? | How come, they didn't take this boy? |
| रा - तौ तु नेतुं सिद्धौ आस्ताम्। किन्तु एषः एव दूरदर्शने चलनचित्रं द्रष्टुम् इच्छन् अत्रैव स्थितवान्। | They wanted to take him, but he stayed behind to see the T.V. film. |
| क - मातापित्रोः अनुपस्थित्या ....। | How, without his parents..... |
| रा - काऽपि चिन्ता नास्ति तस्य। अन्यैः बालैः सह सुखेन क्रीडन् अस्ति सः। | It has made no difference for him. He is playing nicely with the other children. |
| क - अये बाल, अत्र आगच्छतु। किं नाम भवतः? | Hello, boy, come here. What's your name? |
| रा - सः मराठीं विना अन्यां भाषां न जानाति। ऐदंप्राथम्येन महाराष्ट्रात् बहिः आगच्छन् अस्ति सः। | He knows no language except Marathi. This is the first time he has come out of Maharahstra. |
| क - कथं तर्हि अन्यैः बालैः सह व्यवहारः? | Then, how does he mix with other children? |
| रा - भवान् एव पश्यन् अस्ति खलु – कथं सः अन्यैः सह क्रीडन् अस्ति इति? भाषाभेदः तैः सर्वथा विस्मृतः अस्ति। | Please see how he plays. Between them they have no language differences. |

MAGGI CLUBBERS FUN LOVERS
MAGGI CLUB

लॉज़ ऑफ़ दि जंगल गेम

स्नैप सफ़ारी गेम

# मैगी क्लबःआओ मनाएं जंगल में मंगल!

## अपने उपहार मुफ़्त लो!



डिज़्नी टुडे कॉमिक

मैगी नूडल्स के 5 खाली रैपरों के आगे वाले हिस्से से यह चिन्ह काटो और अपनी पसंद के मुफ़्त उपहार पाने के लिए हमें भेज दो. 6 से 8 हफ़्तों में तुम्हें मैगी क्लब की ओर से एक रोचक व आकर्षक उपहार मिल जाएगा.

यह मत भूलो :

अगर तुम मैगी क्लब के सदस्य नहीं हो तो हमें लिखते समय अपने मनचाहे उपहार के नाम के साथ अपना नाम और पता ज़रूर लिखना. और यदि तुम पहले से मैगी क्लब के सदस्य हो तो अपना मेम्बरशिप नम्बर भी साथ भेजना.


फ़ॉरेस्ट फ़ेसिज़ कैप और मास्क


जंगल स्टैन्डीज़ सेट




हमारा पता है : दि मैगी क्लब
पी.ओ. नं. : 5788, नई दिल्ली-110055

और यही नहीं : अगर तुमने अभी तक 'ट्रैवल इंडिया गेम' नहीं लिया है तो आज ही लो!

HTA 6679 HIN

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अङ्गुलिगणनीयाः - A handful
अजा - Goat
उत्कोचः - Bribe
कण्डूतिः - Itch
गोभरः - Manure
चन्द्रशाला - Open terrace
चिन्वन्ति - Choose
तल्पम् - Sofa
द्विचक्रिका - Bicycle
धेनुः - Cow
नियतरूपेण - Promptly
परशुः - Axe
परश्वः - Day after tomorrow
पल्लवः - Sprout
पिपीलिका - Ant
पुंसन्तानः - Male child
पोतकी - A climber
प्रकाण्डम् - Stem
प्रत्युत्पन्नमतिः - Endowed with presence of mind
प्रदर्शिनी - Exhibition
प्रपरश्वः - Two days later
प्रस्तुतः - Presented
प्राकारः - Compound
फणा - Hood of a serpent
महार्घः - Very costly
माकिम् - Approximately
यातायातम् Traffic
वन्ध्या - Barren cow
वल्मीकः - Ant-hill
वातबाधा - Rheumatism
वितर्दिका - Pyol
शतधा - Into hundred divisions
शशाः - Rabbit
श्वः - Tomorrow
सन्नाहः - Preparation
सन्धिः - Agreement
समवयस्कः Of the same age
सर्षपः - Mustard
सहते - Bears
हेषारवः - Neighing

* * *        * * *



# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

'भाषा नाम व्यवहारस्य साधनम्' इति विषयं सर्वेऽपि अङ्गीकुर्वन्ति एव। अतः संस्कृतभाषा अपि साधनम् इति सिद्धम्।

साधनानाम् एषः स्वभावः यत् तानि सदा उपयुज्यमानानि भवन्ति चेदेव तेषां सुस्थितिः। अन्यथा अल्पे एव काले गुणेन हीनानि भवन्ति, कालान्तरे उपयोगनर्हाणि अपि भवेयुः।

उदाहरणार्थं युद्धसाधनं खड्गं परिशील्यन्तु। युद्धादिप्रसङ्गः नास्ति चेदपि उपयोगयोग्यतारक्षणार्थं तस्य मार्जनं, वायौ चालनम् इत्यादिकं करणीयम् एव। अन्यथा अयस्किट्टादिभिः सः ग्रस्तः भवति। तदीया धारा तीक्ष्णताहीना भवति। दुःस्थितौ खड्गः चिरकालं तिष्ठेत्। किन्तु भाविनि काले स च सर्वथा उपयोगानर्हं स्यात्।

संस्कृतभाषा चिरकालं रक्षणीया चेत् तस्याः सुस्थितिविषये अपि अस्माभिः चिन्तनीयम् एव खलु? तदभिज्ञैः यदि संस्कृतेन व्यवहारः न क्रियेत तर्हि सुस्थितिः कथं वा रक्षिता भवेत्? अतः संस्कृतज्ञान् वयं सविनयं सानुरोधं च निवेदयामः यत् प्रतिदिनं संस्कृतेन व्यवहरन्तु इति। संस्कृतेन दैनन्दिनव्यवहारेण मोक्षः लभ्येत वा न वा इति तु न ज्ञायते अस्माभिः, भाषायाः सुस्थितिः रक्षिता भवति इत्यत्र तु नास्ति सन्देहः।

सम्पुटः–७ जून्–१९९० सञ्चिका–३

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू: ३६-००






रसप्रश्नाः–

# रणरङ्गम् आगतः रावणः

(सेतुं निर्माय समुद्रम् अतिक्रम्य आगतया कपिसेनया युद्धम् आरब्धम्। युद्धे रावणपक्षीयाः प्रमुखाः बहवः मृताः। अन्ते रावणः एव स्वयं रणरङ्गम् आगतवान्। रावणेन सह लक्ष्मणः रामश्च युद्धं कृतवन्तौ। वाल्मीकिरामायणस्य एतं कथाभागम् आधारीकृत्य अधः केचन प्रश्नाः सज्जीकृताः सन्ति। युक्तम् उत्तरं जानन्तु।)

I. रणरङ्गे तीव्रं व्रणितः रावणः केन अस्त्रेण लक्ष्मणं मूर्च्छितं कृतवान्?
(अ) शक्त्यायुधेन। (आ) आग्नेयास्त्रेण। (इ) वारुणास्त्रेण।

II. लक्ष्मणस्य मूर्च्छाप्राप्तेः समनन्तरं रावणेन किं कृतम्?
(अ) ततः हनूमता सह युद्धार्थं निर्गतवान्।
(आ) लक्ष्मणम् उन्नीय नेतुं प्रयत्नं कृतवान्।
(इ) सन्तोषेण तस्य दिनस्य युद्धं परिसमाप्य प्रासादं प्रतिगतवान्।

III. रणरङ्गम् आगतः रामः स्वसामर्थ्यं कथं प्रमाणीकृतवान्?
(अ) रावणं मूर्च्छां गमयन्।
(आ) रावणस्य किरीटं पातयन्।
(इ) रावणस्य रथं भञ्जयन्।

IV. 'इक्ष्वाकुवंशीयेन केनचित् मानवेन भवतः मारणं क्रियते' इति पूर्वं रावणं कः सूचितवान् आसीत्?
(अ) राजा अनरण्यः। (आ) देवराजः इन्द्रः। (इ) राजा दिलीपः।

V. 'आगामिजन्मनि अहम् एव भवतः मरणस्य कारणं भविष्यामि' इति का रावणं पूर्वम् आक्रोशेन उक्तवती आसीत्?
(अ) वेदवती। (आ) इन्द्राणी। (इ) पार्वती।

उत्तराणि–

I.–(अ). II.–(आ). III.–(आ). IV.–(अ). V.–(अ).

वार्ताविशेषः –

# अन्याय्यं विरुध्य सुदीर्घं युद्धम्




जातिभेदशब्दश्रवणेन तद्विरुद्धं व्यवहरतः मण्डेलावर्यस्य नाम स्मर्यते। मण्डेलानामश्रवणेन दक्षिणाफ्रिकादेशे श्वेतवर्णीयानां सर्वकारेण जातिम् आधारीकृत्य प्रदर्श्यमानः तारतम्यभावः अपि स्मर्यते। जातिभेदशब्दश्रवणेन एव बहवः उद्विग्नाः कुपिताः च भवन्ति। किन्तु मण्डेलानामश्रवणेन तेषां मनस्सु प्रेम, आदरः, गौरवं, विश्वासः च उत्पद्यते।

कारागारतः मण्डेलावर्यस्य विमोचनं मानवतायाः जयः इति भावयन्ति मानवतावादिनः। कारागारतः विमोचनं प्राप्नुवन् मण्डेला दक्षिणाफ्रिकादेशस्य राष्ट्रपिता जातः अस्ति।

आफ्रिकाखण्डस्य दक्षिणाग्रप्रदेशः दक्षिणाफ्रिका इति उच्यते। एतस्य चत्वारः भागाः सन्ति – केप् आफ् गुड् होप्, नेटाल्, ट्रान्सवाल्, आरञ्ज् फ्री स्टेट् इति। १९६० तमे वर्षे दक्षिणाफ्रिकादेशः स्वतन्त्रः अभवत्। एतस्य राजधानी प्रिटोरिया। एतस्य देशस्य जनसङ्ख्या त्रिकोटिमिता। वैशाल्यं च १२,२१,०३७ चतुरस्र कि.मी.।

अत्यधिकप्रमाणेन अत्र सुवर्णं श्रेष्ठानि वज्राणि च लभ्यन्ते। तथापि अत्रत्यं शासनं तु अधर्मान्यायकलङ्कितम्। श्वेतवर्णीयानां सर्वकारः अस्ति अत्र। ते च अल्पसङ्ख्याकाः

चेदपि तेषां विशेषाधिकाराः। कृष्णवर्णीयाः अत्रत्याः मूलनिवासिनः। किन्तु तेषां निमित्तम् अन्ये एव नियमाः। श्वेतवर्णीयानां निमित्तं च अन्ये। एवं तारतम्यभावः प्रदश्यते स्म श्वेतवर्णीयानां सर्वकारेण।

तारतम्यभावं जातिभेदभावं च विरुध्य दक्षिणाफ्रिकादेशीयैः युद्धम् एव क्रियमाणम् अस्ति। एतद्विषये प्रपञ्चस्य सर्वे देशाः सहानुभूतिमन्तः सन्ति। नेल्सन् मण्डेला 'आफ्रिकन् न्याषनल् कांग्रेस्' संस्थायाः नायकः सन् मुक्तिसङ्ग्रामं सङ्घटयन् आसीत्। अतः श्वेतवर्णीयानां सर्वकारेण सः २७ वर्षाणि यावत् कारागारे स्थापितः। किन्तु यदा प्रपञ्चस्य सर्वाभ्यः दिग्भ्यः मण्डेलावर्यस्य बन्धविमुक्त्यर्थम् अनुरोधः आगतः तदा दक्षिणाफ्रिकासर्वकारेण मण्डेलावर्यः कारागारात् मोचितः। तत्समये मण्डेला सप्ततिवर्षदेशीयः।

यदा मण्डेला कारागारे आसीत् तदा तस्य पत्नी विन्नी मुक्तिसङ्ग्रामस्य नायकत्वम् ऊढवती आसीत्।

इदानीं श्वेतवर्णीयानां सर्वकारेण अवगतम् अस्ति यत् कृष्णवर्णीयैः दुराचारः न सह्यते इति। इदानीं दक्षिणाफ्रिकादेशस्य अध्यक्षः अस्ति एफ्.डब्ल्यू. डिक्लार्क्। एषः पूर्वतनानाम् अपेक्षया उदारः विवेकी च। एतेन एव मण्डेलावर्यः बन्धनात् विमोचितः। डिक्लार्क्वर्येण सह कृष्णवर्णीयानां समस्याः अधिकृत्य चर्चां कर्तुं सिद्धः अस्ति मण्डेला।

श्वेतवर्णीयानां कृष्णवर्णीयानां च मध्ये सौहार्दभावः वर्धतां, तारतम्यभावस्य अन्त्यं च भवतु इति आशास्महे वयम्।





# निद्राभावरोगः

वरदराजपुरे पूर्वं लोकेशः नाम वणिक् निवसति स्म। यदा सः षष्टिवर्षीयः जातः तदा तदीयः पुत्रः केशवः व्यवहारं पूर्णतः निर्वोढुम् आरब्धवान्। अतः इदानीं लोकेशस्य कार्यं किमपि नास्ति।

समययापनं कथम् इति लोकेशस्य महती समस्या। किञ्चित्कालं शयनं करोति सः। पुनः किञ्चित्कालम् अटति। अवशिष्टे समये गृहे एव तिष्ठन् पुत्रं, स्नुषां, पौत्रान् च किमपि वदन्, दोषान् प्रदर्शयति।

प्रतिदिनम् अपेक्षितानि खाद्यानि कारयित्वा आकण्ठं भोजनं करोति सः। अनन्तरं सम्यक् निद्राम् अपि करोति। दिने निद्रा अधिकतया क्रियते इत्यतः रात्रौ निद्रां न प्राप्नोति। 'निद्राभावरूपः रोगः मां बाधते' इति सर्वान् वदति सः।

लोकेशस्य कथनं श्रुत्वा आत्मीयाः बन्धवश्च हसन्ति स्म।

"पश्यतु लोकेश! निद्राभावः न रोगः। इदानीं व्यवहारं पुत्रः खलु पश्यति? अतः भवतः कार्यम् एव नास्ति। समयः कथं यापनीयः इति अजानन् भवान् असमये निद्रां करोति। अतः रात्रौ निद्रा न प्राप्यते। आदिनं परिश्रमेण कार्यं करोतु। सर्वं सम्यक् भविष्यति" इति उपदिष्टवन्तः केचन। परिश्रमम् अनिच्छन् लोकेशः तान् औदासीन्येन पश्यति।

रात्रौ अन्ये सम्यक् निद्रां कुर्वन्ति चेत् एषः असूयां प्राप्नोति। अतः सः निद्रामग्नां पत्नीम् उत्थाप्य वदति– "क्षीरपात्रस्य उपरि आवरणं सम्यक् स्थापितवती वा न वा? मार्जारः क्षीरं पिबेत्, पश्यतु" इति।

एवम् एव निद्रामग्नं पुत्रम् उत्थाप्य वदति– "भवतः पत्नी स्वपुत्राय क्षीरं दत्तवती खलु?" इति।

गाढायाः निद्रायाः भङ्गं को वा सहते?

"अनामिका"



अतः प्रतिदिनं लोकेशः यदा जागरयति तदा गृहसदस्याः कुपिताः भवन्ति। वृद्धं ज्येष्ठं तं निन्दितुम् अशक्नुवन्तः ते कठोरेण स्वरेण वदन्ति स्म– 'इतः परं अस्मान् एवं न उत्थापयतु कृपया' इति।

इदानीं लोकेशस्य स्थितिः पूर्वापेक्षया शोचनीया जाता। रात्रौ स्वयं निद्रां तु न प्राप्नोति। अन्यान् उत्थाप्य वार्तालापं कर्तुम् अपि न अर्हति। अतः किं करणीयम् इति समस्या तस्य। एतां समस्यां परिहर्तुम् इच्छन् सः कदाचित् रात्रौ गृहात् निर्गत्य ग्रामसीमायां स्थितस्य सरोवरस्य समीपं गतवान्। तत्र वृक्षस्य अधः भूमौ एव सुखेन शयानः कश्चित् दृष्टः तेन।

एतत् दृष्टवतः लोकेशस्य मनसि अशान्तिः– 'गृहे अहं समीचीनस्य तल्पस्य उपरि शयनं करोमि चेदपि निद्रां न प्राप्नोमि। एषः तु भूमौ एव शयानः सुखेन निद्रां कुर्वन् अस्ति' इति।

लोकेशः तम् उत्थाप्य पृष्टवान्– "एवं भूमौ शयनेन अपि सुखमयीं निद्रां प्राप्नुवन् कः भवान्?" इति।

तदा सः पुरुषः झटिति उत्थाय पार्श्वस्थं दण्डं हस्तेन स्वीकृत्य पृष्टवान्– "कः भवान्? चोरः उत पिशाचः?" इति।

लोकेशः तदीयं दण्डं भीत्या पश्यन् उक्तवान्– "अहं न चोरः, न वा पिशाचः। मम कश्चन घोरः रोगः अस्ति। रात्रौ अहं निद्राम् एव न प्राप्नोमि। गृहे सर्वे सुखेन निद्रां कुर्वन्ति। अहं तान् उत्थापयामि चेत् ते कुपिताः भवन्ति। अतः किं करणीयम् इति अजानन् सञ्चरन् अत्र आगतवान्। तदस्तु, कः भवान्? अत्र एवं किमर्थं शयनं करोति?" इति।

तदा सः पुरुषः उक्तवान्– "अहं रात्रौ ग्रामस्य रक्षणं करोमि। मम नाम गण्डकः इति। गृहे आदिनं कार्यं भवति एव। विश्रान्त्यर्थम् अपि समयः न लभ्यते। अतः रात्रौ रक्षणकार्यं कुर्वन् एव मध्ये मध्ये किञ्चित् निद्राम् अपि करोमि" इति।

लोकेशः किञ्चित् विचिन्त्य उक्तवान्– "भवान् रात्रौ निद्रां निरोद्धुं न शक्नोति। अहं

रात्रौ निद्रां न प्राप्नोमि। अतः आवां समययापनार्थं व्याघ्रहरिणकं क्रीडाव। समीचीना कौमुदी तु अस्ति एव'' इति।

''व्याघ्रहरिणकक्रीडने ममापि इच्छा अस्ति एव। किन्तु अहम् अत्र क्रीडन् भवामि चेत् रक्षणकार्यं को वा कुर्यात्? रात्रौ चौर्यं किमपि प्रवृत्तं चेत् मम उद्योगः नष्टः स्यात्। अतः एवं कर्तुं शक्यते। आवां व्याघ्रहरिणकं क्रीडाव। मध्ये मध्ये भवान् ग्रामे सञ्चारं कृत्वा आगच्छतु। तावता अहं लघुनिद्रां समापयामि। एवं करणेन भवता किमपि कार्यं कृतं भवति। ममापि साहाय्यं भवति'' इति सूचितवान् गण्डकः।

लोकेशः एतं प्रस्तावम् अङ्गीकृतवान्। अनन्तरं तौः वृक्षस्य अधः उपविश्य व्याघ्रहरिणकक्रीडाम् आरब्धवन्तौ किञ्चित्कालान्तरं गण्डकः– ''इदानीं मम निद्रा आगच्छति'' इति उक्त्वा भूमौ शयानः निद्रां कृतवान्। गण्डकस्य दण्डं स्वीकृत्य ग्रामरक्षणार्थं प्रस्थितवान् लोकेशः।

व्याघ्रहरिणकक्रीडा यथा मनः तोषयति तथा एतत् ग्रामसञ्चारकार्यं न तोषयति। तथापि एतत् अनिवार्यम्। प्रतिदिनं क्रीडा निर्विघ्नं प्रचलेत् इति अस्ति चेत् ग्रामरक्षणकार्यम् अपि करणीयम् एव। अतः अप्रियम् अपि तत् कार्यं करोति लोकेशः।

लोकेशः एवं प्रतिदिनं रात्रौ गृहात् निर्गत्य गण्डकेन सह किञ्चित्कालं क्रीडति, पुनः गण्डकस्य दण्डं स्वीकृत्य ग्रामरक्षणार्थं गच्छति। अल्पे एव काले पितुः व्यवहारविषये






केशवस्य संशयः उत्पन्नः। एकस्मिन् दिने सः पितरम् अनुसृत्य गत्वा प्रवर्तमानं सर्वं ज्ञातवान्।

पितुः व्यवहारेण सः नितरां खिन्नः। पितरि कथं परिवर्तनम् आनेतव्यम् इति सः गभीरं चिन्तयति।

'ग्रामे अस्माकं विशेषतः गौरवम् अस्ति। कुलस्य अपि कीर्तिःमहती अस्ति। एवं स्थिते पितुः व्यवहारः सर्वैः ज्ञातः चेत् अस्माकं गौरवस्य का गतिः? पितुः व्यवहारः अन्यैः ज्ञातः चेत् मम अपि अपमाननम्। जनाः मां प्रदर्शयन्तः— 'पश्यतु भोः, एतस्य पिता कर्मकरः इव प्रतिदिनं ग्रामरक्षणं करोति' इति वदेयुः। मातरं भगिनीं वा यदि वदेयं तर्हि रहस्यं कदाचित् प्रकटितं भवेत्। एवं तर्हि केन सह एतस्मिन् विषये समालोचनं करिष्यामि? कः समस्यायाः परिहारार्थं मार्गं सूचयेत्?' इति आलोचयति केशवः। रात्रौ सम्यक् निद्राम् अपि न प्राप्नोति सः।

एषु एव दिनेषु केशवस्य मातुलः कुमारस्वामी आगतः। केशवः एकान्ते कुमारस्वामिनं सर्वं निवेद्य— "इदानीं किं करणीयम् इति तु मया सर्वथा न ज्ञायते" इति उक्तवान्।

तदा कुमारस्वामी हसन् उक्तवान्— "एषा महती समस्या न। भवतः पितरि सुलभतया एव परिवर्तनम् आनेतुं शक्यते। अद्य अहं गृहस्य पुरतः वितर्दिकायां शयनं करोमि। मम पार्श्वे एकं दण्डं स्थापयतु भवान्। उषःकाले पितुः प्रत्यागमनसमये किं भविष्यति इति रहसि निलीय जानातु" इति।

केशवः एतत् अङ्गीकृत्य मातुलेन यथा उक्तं तथा व्यवस्थां कृतवान्।

लोकेशः प्रतिदिनम् इव गण्डकेन सह व्याघ्रहरिणकं क्रीडित्वा, रक्षकदण्डेन सह ग्रामे सञ्चारं कृत्वा, गण्डकाय दण्डं प्रत्यर्प्य गृहं प्रत्यागतवान्।

तावता गृहस्य पुरतः शयानः कुमारस्वामी उत्थाय दण्डं प्रदर्शयन् उक्तवान्— "भवान् ग्रामरक्षकाय गण्डकाय दण्डं प्रात्यर्पयितुम् एव विस्मृतवान् खलु? सः दण्डः अत्र एव अस्ति" इति।

एतत् श्रुत्वा दिग्भ्रान्तः लोकेशः आत्मनः दिग्भ्रान्तिं कथमपि गोपयन् पृष्टवान्– "गण्डकः कः? दण्डः कः? किं वदन् अस्ति भवान्?" इति।

तदा कुमारस्वामी उच्चैः हसन् उक्तवान्– "भोः, पश्यतु। रात्रौ भवान् गण्डकेन सह व्याघ्रहरिणकं क्रीडति, दण्डं स्वीकृत्य ग्रामे सञ्चरति इति भवतः पुत्रः जानाति। अद्य अहम् अपि ज्ञातवान्। एवम् एव ग्रामे अन्ये अपि केचन जानन्ति चेत् भवतः गौरवस्य का गतिः? सर्वे भवतः उपहासं करिष्यन्ति" इति।

'कुमारस्वामी यत् वदति तत् युक्तम् एव। रात्रौ समयः कथं यापनीयः इति अजानन् अहं गृहात् निर्गत्य गण्डकस्य सहवासे पतितः। तेन प्रेरितः ग्रामरक्षणकार्ये उद्युक्तः च। एवं च मया अनुचितं कार्यं कृतम् इति तु सत्यम् एव' इति आलोचितवान् लोकेशः।

"भवतः कथनम् अहम् अङ्गीकरोमि। किन्तु मम कष्टं कः शृणोति? रात्रौ अहं निद्रां न प्राप्नोमि। आरात्रि कथं समयः यापनीयः मया? किं करणीयं तदा? भवान् एव परिहारं सूचयतु" इति उक्तवान् लोकेशः।

"शृणोतु भोः। आदिनं निद्रां करोति भवान्। अतः रात्रौ निद्रा न प्राप्यते। दिने किमपि कार्यं कुर्वन् भवतु। बालैः सह क्रीडतु। गृहकार्येषु साहाय्यं करोतु। एवं साहाय्यं कृतं चेत् गृहसदस्याः अपि सन्तुष्टाः आदरवन्तः च भवन्ति। कार्यवशात् श्रान्तिः जाता चेत् सहजतया रात्रौ निद्रा आगच्छति। अहम् अत्र कानिचन दिनानि स्थास्यामि। मम कथनानुगुणं कृतं चेत् कुतो वा निद्रा न प्राप्येत इति परिशीलयिष्यामि च" इति सूचितवान् कुमारस्वामी।

लोकेशाय एषः प्रस्तावः अरोचत। तद्दिनतः एव सः नूतनं जीवनक्रमम् आरब्धवान्। आदिनं कार्यं क्रियमाणम् अस्तीत्यतः रात्रौ समीचीनां निद्रां प्राप्नोति सः। समस्या परिहृता इत्यतः केशवः कुमारस्वामी च नितरां सन्तुष्टौ।



# कीर्तिकामनारहितः

शारदपुरस्य राजा नितरां चतुरः। सः कदाचित् राज्ये वार्तां प्रसरितवान्– 'ये कीर्तिविषये नितराम् उदासीनाः तादृशान् सत्कर्तुम् इच्छति महाराजः। अतः ये कीर्तिं सर्वथा न इच्छन्ति ते अमुकदिने राजास्थाने उपस्थिताः भवेयुः, इति।

राज्ञा निर्दिष्टं दिनम् आगतम्। बहवः राजसभायाम् उपस्थिताः आसन्।

राजा तान् पश्यन् हसन् उक्तवान्– "भवन्तः आत्मानं सम्माननार्हान् भावयन्तः खलु आगतवन्तः? ये सम्माननम् इच्छन्ति ते कीर्तिविमुखाः कथं वा भवितुम् अर्हन्ति? अतः भवन्तः मिथ्यावादिनः। भवन्तः इतः गन्तुम् अर्हन्ति" इति।

तदा प्रदीपः नाम कश्चन युवकः उक्तवान्– "प्रभो! अन्येषां विषये अहं किमपि न जानामि। किन्तु अहं वस्तुतः अपि सम्माननं प्राप्तुम् अर्हः। मयि कीर्तिकामनालेशः अपि नास्ति" इति।

"एवं तर्हि सम्माननं प्राप्तुं किमर्थम् आगतः? एवम् आगमनम् एव द्योतयति खलु भवतः कीर्तिकामनाम्?" इति पृष्टवान् राजा।

तदा प्रदीपः उक्तवान्– "प्रभो! अस्माकं ग्रामस्य प्रगत्यर्थं बहुधा कार्यं कृतं मया। तदर्थं मद्ग्रामीणाः मम सम्माननार्थं बहुधा प्रयत्नं कृतवन्तः। किन्तु अहं कीर्तिं सर्वथा न इच्छामि। कीर्तिः जुगुप्सा मम। अतः 'सम्मानेच्छारहितः' इति कीर्तिः एतावता प्राप्ता अस्ति मया। यदि भवता क्रियमाणं सम्माननम् अपि अहं न प्राप्नुयां तर्हि मम कीर्तिः भवतः कीर्तिम् अपि अतिरिच्य सर्वत्र प्रसरिष्यति" इति।

राजा प्रदीपस्य वाक्चातुर्येण नितरां सन्तुष्टः। अनन्तरं सः तं विशेषतः सत्कृतवान्। तत्र उपस्थिताः सर्वे सन्तोषेण करताडनं कृतवन्तः।





# लुण्ठाकः युवराजः

## ८

(वीरसिंहः सुमेधराज्यस्य सिंहासनं कुतन्त्रेण स्वायत्तीकृतवान् चेदपि सुखेन स्थातुं न शक्तवान्। वृद्धं मन्त्रिणं वसन्तं च रक्षितवान् अपरिचितः पुरुषः कः इति न ज्ञातं तेन। तस्य मनसि सदापि सन्देहः— शत्रवः कदाचित् कुतश्चित् आक्रमणं कुर्युः इति। शत्रूणां वास्तरिकं सामर्थ्यं न जानाति सः। तत् ज्ञातुं सः जनान् पीडयितुम् आरब्धवान्। तदनन्तरम्......।)

दिनानि गतानि। प्रतिवेशिराज्यानि जेतव्यानि इति इच्छा तीव्रं बाधते वीरसिंहम्। अतः सः दलपतीन् मेलयित्वा तेषां सम्मुखे स्वस्य इच्छां प्रकटितवान्। दलपतयः अपि एतादृशम् एव अवकाशं प्रतीक्षमाणाः आसन्। युद्धव्याजेन गतं चेत् ते जनान् लुण्ठयित्वा धनकनकादिकं प्रभूतं प्राप्तुम् अर्हन्ति स्म।

वीरसिंहस्य सेनापतेः नाम कपालकण्ठः इति। सः वीरसिंहस्य परमप्रियः आसीत्। अनन्तरदिने वीरसिंहः तं स्वसमीपम् आहूय सुखासने उपविश्य पृष्टवान्— "प्रतिवेशिराज्यानि स्वायत्तीकरणीयानि इति मम इच्छा। किं वदति भवान् एतद्विषये?" इति।

एतत् श्रुतवतः कपालकण्ठस्य मुखं




सन्तुष्टाः भविष्यन्ति" इति।

एतानि वचनानि श्रुत्वा वीरसिंहः नितरां सन्तुष्टः। सः मन्दहासपूर्वकं सेनापतिम् उक्तवान्– "भवता युक्तम् एव उक्तम्। युद्धतः महान् लाभः प्राप्यते। कस्य देशस्य उपरि अस्माकं प्रथमम् आक्रमणं भवतु? वदतु तावत्" इति।

"एतद्विषये मया बहुपूर्वम् एव चिन्तनं कृतं, योग्यः सन्नाहः आरब्धः च। अमृतपुर्याः उपरि अस्माकं प्रथमम् आक्रमणं भवितुम् अर्हति। यतः अमृतपुर्याः राजा सत्यसेनः शान्तिदेवस्य श्वशुरः, तत्पक्षपाती चापि। भवद्विषये तस्य कोपः अपि आसीत्। अतः तेनापि युद्धस्य सन्नाहः क्रियमाणः स्यात्। एतत् ज्ञातुम् इच्छन् अहम् अमृतपुरीं प्रति गमनागमनं कुर्वतः जनान् सूक्ष्मं परिशीलयन् अस्मि। केचन मया कारागारे स्थापिताः अपि। एतेषु केचन वा अस्मद्विरुद्धे व्यवहारे निरताः स्युः इति प्रतिभाति" इति उक्तवान् कपालकण्ठः।

"साधु! कार्यं कृतं भवता। मया श्रुतं यत् एषु दिनेषु सत्यसेनः व्याधिकारणतः शय्याम् आश्रितवान् अस्ति इति। अतः युद्धार्थम् एषः एव सुसमयः। युद्धसन्नाहः त्वरया प्रचलतु नाम। नद्याः क्रमणार्थं नौकाः अपेक्षिताः खलु? अतः तद्विषये अपि विशेषव्यवस्था भवतु" इति सूचितवान् वीरसिंहः।

तदा कपालकण्ठः हसन् उक्तवान्–

विकसितम् अभवत्। युद्धार्थं तस्यापि बाहवः सदा स्फुरन्ति स्म एव। अतः सः सन्तोषेण एव उक्तवान्– "महाप्रभो! ममापि इच्छा एवमेव अस्ति। युद्धार्थम् एषः सुसमयः। युद्धम् उद्घुष्टं चेत् जनानाम् अवधानं युद्धे स्थापितं भवति। कस्य जयः भवेत्, कस्य पराजयः स्यात् इति चिन्तयन्तः भवन्ति जनाः। तत्कारणतः भवद्विषयकः असन्तोषः क्षीणः भविष्यति। प्रतिवेशिराजानां पराजयतः यत् धनकनकादिकं प्राप्यते तेन अस्माकं धनागारं पूर्णं भविष्यति। धनागारपूर्त्या देशस्य समृद्धिः, देशस्य समृद्ध्या च जनानां तृप्तिः, ततश्च भवतः कीर्तिः। एतेन प्रसङ्गेन भवत्सेवकाः अपि

"प्रभो! युद्धसन्नाहविषये चिन्ता एव मास्तु भवतः। सेना तु सिद्धा अस्ति एव। सुमतीनद्याम् एतस्मिन् समये जलम् अधिकं न भवति। तरणेन अपि नदीक्रमणं शक्यम्। अतः अस्माकं समीपे यावत्यः नौकाः सन्ति तावतीभिः एव निर्वाहः शक्यः इति भाति मम" इति।



वीरसिंहः क्षणकालं चिन्तयित्वा पृष्टवान्— "एवं तर्हि प्रस्थानार्थं सेना कदा सन्नद्धा भवितुम् अर्हति?" इति।

सेनापतिः कपालकण्ठः झटिति उत्तरं दत्तवान्— "कदा इति? श्वः एव प्रस्थानं भवितुम् अर्हति। सेना तु सन्नद्धा एव अस्ति" इति।

"साधु, कपालकण्ठ! साधु! सेनापतिः नाम भवान् एव। अमूल्यैः उपायनैः सत्करणीयः भवान्। अमृतपुरीं जित्वा प्रत्यागमनस्य अनन्तरं सर्वप्रथमं भवतः सत्कारं करिष्यामि। परश्वः रात्रौ अस्माकं विजययात्रायाः आरम्भः भवतु" इति उक्तवान् वीरसिंहः।

"परश्वः पूर्णिमा। कौमुदीप्रकाशे अस्माकं सेना विना शब्दं प्रस्थाय नदीम् अतिक्रम्य अमृतपुर्याः उपरि आक्रमणं करिष्यति। अल्पेन एव प्रयासेन तत् राज्यम् अस्मदधीनं भविष्यति" इति उत्साहेन उक्तवान् कपालकण्ठः।

अनन्तरं सः वीरसिंहं भक्त्या प्रणम्य वीरसिंहस्य आज्ञां कार्यान्वितां कर्तुं ततः निर्गतवान्।

तस्याम् एव रात्रौ कपालकण्ठेन दलपतीनां मेलनं व्यवस्थापितम्। तस्मिन् मेलने सः वीरसिंहस्य आशयं श्रावितवान्। एतत् श्रुत्वा सर्वे दलपतयः नितरां सन्तुष्टाः। अमृतपुर्याः सेनायाः सामर्थ्यम् अल्पम् इति ते सर्वे जानन्ति। अल्पस्य उपरि आक्रमणं कृतं चेत् जयः निश्चितः। अन्यच्च अमृतपुरी समृद्धं राज्यम्। अतः एतस्मिन् युद्धे द्विगुणितः उत्साहः दलपतीनाम्।

युद्धव्यवस्थाविषये सूचनाः दत्त्वा अन्ते उक्तवान् कपालकण्ठः— "युद्धसन्नाहः एतस्मिन् क्षणे एव आरब्धः स्यात्।



आक्रमणविषयः सर्वथा गोपनीयः। कोऽपि रहस्यं प्रकटयति चेत् सः प्राणैः वियुक्तः भवेत्" इति।

अनन्तरं सर्वे दलपतयः ततः निर्गताः। तेषु अन्यतमः दलपतिः ततः साक्षात् पानशालां गत्वा सुरां पिबन् मत्तः सन् पानशालास्वामिनम् उक्तवान्– "भोः, मया आहत्य पञ्चाशत् रजतनाणकानि खलु दातव्यानि? एतद्विषये चिन्तां मा करोतु। प्रत्यागमनान्तरं रजतनाणकानि किं, सुवर्णनाणकानि एव दास्यामि। यदि इच्छति तर्हि पञ्च नाणकानि अधिकतयैव दास्यामि" इति।

"कुतः प्रत्यागमनम्? धनप्राप्तिः कथम्?" इति आश्चर्येण पृष्टवान् पानशालास्वामी।

"नदीं तीर्त्वा गमनं, ततः प्रत्यागमनम्। इतोऽपि अधिकं किमपि मा पृच्छतु। सर्वं तत् रहस्यम्" इति मन्दस्वरेण उक्तवान् दलपतिः।

"प्रत्यागमनं कदा भविष्यति भोः?" इति पुनः पृष्टवान् पानशालास्वामी।

"श्वः रात्रौ प्रस्थाय आक्रमणं करिष्यामः। प्रत्यागमनं श्वः रात्रौ एव, परश्वः, प्रपरश्वः वा भवेत्" इति मन्दहासपूर्वकम् उक्तवान् दलपतिः।

पानशालायाः पुरतः उपविश्य कश्चन भिक्षुकवेषधारी पुरुषः एतत् सम्भाषणं शृण्वन् आसीत्। सः शृण्वन् अस्ति इति कोऽपि न जानाति। वस्तुतः तु भिक्षुकवेषेण स्थितस्य तस्य उपस्थितिः अपि केनापि न लक्षिता आसीत्। सः भिक्षुकवेषेण स्थितः चेदपि तस्य मुखे अपूर्वा कान्तिः, दृढता, विवेकशालिता च स्फुटं दृश्यते स्म।

एषः युवकः न अन्यः, अपि तु पूर्वप्रस्तुतः वसन्तः एव। सः विभिन्नैः वेषैः सुमेधराज्ये अटन् वार्ताः सङ्गृह्णाति, सुदृढान् युवकान् विचारेण वशीकृत्य स्वपक्षे योजयति च। पानशालां प्रति सैनिकाः सदापि आगच्छन्तः भवन्ति इति सः जानाति। पानमत्तानां सैनिकानां मुखतः अप्रयत्नेन एव युद्धनिश्चयवार्ता निर्गच्छति। एतादृशी

काऽपि वार्ता स्यात् वा इति ज्ञातुम् अत्र आगत्य उपविष्टः अस्ति सः। इदानीं भटस्य मुखात् तादृशी वार्ता ज्ञाता एव।

वीरसिंहः यावच्छीघ्रं नाशनीयः इति चिन्तयति वसन्तः। किन्तु तादृशं कार्यं कदा सेत्स्यति इति न जानाति सः। मरणदण्डनात् रक्षितवतः अवगुण्ठनधारिणः निर्देशानुसारं कार्यं कुर्वन् अस्ति सः। महता प्रयत्नेन अपि सः पुरुषः कः, किं नाम तस्य-इति ज्ञातुं न शक्तवान् वसन्तः। वसन्तेन पृष्टः सः पुरुषः उक्तवान् आसीत्– "मद्विषये इदानीं किमपि मा पृच्छतु। समये सर्वं ज्ञायते। त्वरां मा करोतु। त्वरा कार्यविघातिनी" इति। तस्य अज्ञातपुरुषस्य आकारं, गाम्भीर्यं, व्यवहारं च दृष्ट्वा वसन्तः तं राजगौरवेण एव पश्यति स्म।

'वीरसिंहस्य नाशनप्रयत्नतः पूर्वं सुमेधराज्यस्य परिस्थितिः पूर्णतः अवलोकनीया अस्माभिः। के शत्रुपक्षीयाः, के अस्मत्पक्षीयाः इति प्रथमं निर्णेतव्यम्। जागरूकतया व्यवहृत्य अस्माकं शक्तिः सङ्ख्याबलं च वर्धनीयम्। विना कारणं कोऽपि शत्रुरपि न पीडनीयः। किन्तु कश्चित् प्रजाः, दुर्बलान्, स्त्रीः वा पीडयन् स्यात् तर्हि धैर्येण सम्मुखीकृत्य सः पीडकः नाशनीयः' इति वदति स्म सः अज्ञातपुरुषः।

अपूर्वां वार्तां प्राप्य वसन्तः मन्दं पानशालातः दूरं गतवान्।



पानशालायाः मुखद्वारे अन्धकारः आसीत्। तत्रैव स्तम्भे तस्य दलनायकस्य अश्वः बद्धः आसीत्।

वसन्तः मन्दम् अश्वस्य समीपं गत्वा प्रीत्या तस्य पृष्ठभागस्य उपरि मृदु हस्तं चालयन् अश्वः हेषारवं यथा न कुर्यात् तथा कृतवान्। अनन्तरम् अश्वं विमोच्य अन्धकारे कानिचन पदानि स्थापितवान्। ततः अश्वम् आरुह्य वेगेन तं चोदितवान् च।

एकघण्टाभ्यन्तरे तेन सुमतीनदीतीरं प्राप्तम्। वसन्तः अश्वात् अवतीर्य अश्वं तत्रैव त्यक्त्वा नद्याम् अवतरणं कृतवान्। नद्यां कुत्र तरणं सुलभम् इति जानाति सः। अतः लीलया तरन् नद्याः अपरस्मिन् तीरे



अस्वस्थः सत्यसेनराजः मन्त्रिणा निवेदितं सर्वं श्रुत्वा– "मम पुत्री जामाता च अज्ञातं लोकं गतवन्तौ। इदानीं शत्रोः दृष्टिः अस्माकम् उपरि पतिता। अहो दुर्विधिः!" इति खेदेन उक्तवान्।

"प्रभो, निराशा मास्तु। कुलदेव्याः नाम्ना शपे। मम शरीरे यावत् रक्तं प्रवहति तावत् देशरक्षणम् अहं करिष्यामि" इति उक्तवान् सेनापतिः।

"भवतः राजनिष्ठां देशभक्तिं च जानामि अहम्। किन्तु सुमेधराज्यस्य सैन्यं सुविशालम्। अस्माकं सैन्यम् अत्यल्पम्। युद्धं भविष्यति चेत् अस्माकं पराजयः निश्चितः। एवं स्थिते वृथा प्राणहानिः किमर्थम्? अतः भवन्तः श्वेतपताकया सह नदीतीरं गच्छन्तु। एतस्मिन् सन्दर्भे सन्धिः एव वरम्" इति उक्तवान् सत्यसेनराजः।

मन्त्री सेनापतिः च क्षणकालं मौनं स्थितवन्तौ। अनन्तरं मन्त्री उक्तवान्– "प्रभो! भवतः यथा आज्ञा तथा व्यवहरामः वयम्। इदानीम् अन्यः युक्ततरः कोऽपि मार्गः नास्ति एव। किन्तु प्रबलः शत्रुः अस्माकं सन्धिप्रस्तावम् अङ्गीकुर्यात् वा इति मम सन्देहः अस्ति एव। युद्धम् अनिवार्यं भवेत् इति भाति मम" इति।

राजा मौनं स्थितवान्।

* * * *

पूर्वयोजनानुसारं पूर्णिमायां रात्रौ

स्थिताम् अमृतपुरीं प्राप्तवान् सः।

अमृतपुरी लघु नगरम्। तत्रत्याः जनाः शान्तिप्रियाः श्रमशीलाः च। समग्रं नगरं तत्समये निद्रामग्नम् आसीत्। वसन्तः साक्षात् मन्त्रिणः भवनं गत्वा रक्षकभटम् उक्तवान्– 'मया त्वरया मन्त्री द्रष्टव्यः' इति।

मन्त्री तत्समये जागरितः एव आसीत्। वसन्तस्य उत्कण्ठायुक्तं वचनं श्रुत्वा सः भटं सूचितवान् यत् तम् अन्तः प्रेषयत् इति।

वसन्तः अन्तः गत्वा वीरसिंहेन क्रियमाणं युद्धसन्नाहं निवेदितवान्। मन्त्री तत्क्षणे सेनापतिम् आनायितवान्। सेनापतिना सह राजभवनं गतवान् च।

वीरसिंहस्य सेनया सुमतीतीरं प्राप्तम्। सर्वे सैनिकाः उत्साहेन नौकायाम् उपविष्टवन्तः। दलपतयः अपि नौकाः आरूढवन्तः। सर्वेषाम् आरोहणस्य अनन्तरं कपालकण्ठः सैनिकान् पश्यन् आज्ञास्वरेण उक्तवान्– "सर्वे अविलम्बेन युगपत् एव अपरं तीरं प्राप्नुयुः। केनापि कारणेन विलम्बः न भवेत्" इति।

पार्श्वे स्थितः वीरसिंहः अभिमानेन कपालकण्ठं पश्यन् तेन सह स्वयम् अपि अपरां नौकाम् आरूढवान्।

नद्याः अपरस्मिन् तीरे अमृतपुर्याः सेना दृश्यते। वीरसिंहेन सह सन्धिविषये वार्तालापं कर्तुम् इच्छन् मन्त्री श्वेतया पताकया सह अग्रे स्थितः अस्ति।

अत्रान्तरे भयङ्करः कश्चन शब्दः श्रुतः। किं जातम् इति सर्वेषु भीत्या पश्यत्सु नद्यां पर्वताकारः प्रवाहः आगतः। उपरिभागे कुत्रचित् अतिवृष्टिकाणतः कोऽपि पर्वतः द्विधा भग्नः आसीत्। पर्वतमध्यात् एतादृशः राक्षसप्रवाहः आगतः आसीत्। इदानीं तत्र सर्वत्र हाहाकारः। नौकाः, नौकास्थाः सैनिकाश्चापि प्रवाहेण नीताः। प्राणरक्षणार्थं व्यर्थः प्रयत्नः कृतः सैनिकैः। किन्तु सजीवं स्थिताः तु अङ्गुलिगणनीयाः स्युः। वीरसिंहः कपालकण्ठः च अन्ते प्रस्थितवन्तौ इत्यतः कथमपि आत्मानं रक्षितुं समर्थौ जातौ।

अल्पे एव काले नदी यथापूर्वं जाता। पुनरपि तत्रत्यः परिसरः प्रशान्तगम्भीरः जातः।

पर्वताकारकः अपायः पुष्पताम् आपन्नः सन् दूरम् अपगतः इति श्रुत्वा सत्यसेनराजः नितरां सन्तुष्टः। "भगवान् एव अस्मान् अपायात् रक्षितवान्। अग्रे एतादृशी परिस्थितिः पुनरपि न आगच्छेत् इति नास्ति। तदर्थम् इदानीम् एव सन्नाहः आरम्भणीयः" इति मन्त्रिणम् उक्तवान् सः।

"आं प्रभो! मनुष्येण कदापि प्रयत्नविषये औदासीन्यं न प्रदर्शनीयम्। तदैव भगवत्कृपा सहकरिष्यति" इति उक्तवान् मन्त्री।

–(अनुवर्तते)





# प्रजाजागरणम्

महाराजस्य त्रिविक्रमस्य मौनस्य भङ्गं न करोमि चेत् मम जीवनं व्यर्थम् इति भावयन्तम् इव स्थितं वेतालं वशीकर्तुम् इच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! भवान् एवं मध्यरात्रे असाध्ये कार्ये प्रवृत्तः अस्ति खलु? राज्यपालनकार्ये विश्वासार्हं जनं नियोजितवान् अस्ति खलु? अन्यथा भवान् वञ्चितः भवेत्। भवतः अनुपस्थितौ सः जनः निरङ्कुशतया व्यवहरति चेत्, स्वार्थपरः भवति चेत् तं निग्रहीतुं भवतः सामर्थ्यम् अस्ति वा? चिन्तयतु। पूर्वं शत्रुञ्जय-नामकस्य राज्ञः एतादृशी एव परिस्थितिः आसीत्। मार्गायासपरिहारार्थं तस्य कथां श्रावयामि तावत्" इति।

## वेतालकथा



अनन्तरं वेतालेन कथा आरब्धा—

पूर्वं भुवनगिरिराज्यं शत्रुञ्जयः नाम राजा पालयन् आसीत्। सः राजपदवीप्रियः न। प्रजानां योगक्षेमनिर्वहणम् आद्यं कर्तव्यं भावयति स्म सः। अतः सः राज्यं शतधा विभज्य एकैकस्मिन् भागे एकैकम् अधिकारिणं नियोजितवान् आसीत्। तत्तस्य भागस्य योगक्षेमनिर्वहणे तत्तस्य अधिकारिणः पूर्णः अधिकारः भवति स्म।

भुवनगिरिराज्ये प्रजासु यः कोऽपि यदा कदापि राजानं दृष्ट्वा कष्टसुखं निवेदयितुम् अर्हति स्म। किन्तु एवं कष्टं निवेदयितुं बहोः कालतः कोऽपि न आगतः आसीत्। अतः राजा चिन्तयति स्म यत् मम राज्ये प्रजाः सुखेन सन्तोषेण च सन्ति इति।

एवं स्थिते कदाचित् शरच्चन्द्रनामकः कश्चित् महाराजं शत्रुञ्जयं दृष्ट्वा निवेदितवान्— "प्रभो! भवता राज्यं शतधा विभज्य तेषु भागेषु अधिकारिणः नियोजिताः। प्रजाभ्यः दीयमानः करः नियतरूपेण प्राप्यते भवता। एतावता भवान् चिन्तितवान् यत् शासनं सुव्यवस्थितम् अस्ति इति। किन्तु भवता नियुक्ताः अधिकारिणः निरङ्कुशाः सन्तः स्वेच्छया व्यवहरन्तः सन्ति इति प्रायः न जानाति भवान्। तेषां दौष्ट्यं वर्णनातीतम्। दौष्ट्यं विरुध्य व्यवहरतः मादृशान् ते चित्रहिंसया पीडयन्तः सन्ति" इति।

तदा राजा शत्रुञ्जयः आश्चर्यम् अनुभवन् शरच्चन्द्रं पृष्टवान्— "भवता स्वयं कोऽपि क्लेशः अनुभूतः, उत अन्येन अनुभूयमानः क्लेशः दृष्टः?" इति।

"महाप्रभो! अहं यत्र निवसामि तस्य भागस्य अधिकारी वीरदत्तः। सः अद्वितीयः उत्कोचग्राही। यः अधिकम् उत्कोचं ददाति सः असमर्थः अपि उच्चम् उद्योगं प्राप्नोति। अश्रुतपूर्वाः कराः विहिताः सन्ति वीरदत्तेन। पर्वाचरणार्थम् अपि करः दातव्यः प्रजाभिः। वीरदत्तः तु वैभवोपेतं जीवनं यापयति" इति उक्तवान् शरच्चन्द्रः।

"भवद्विषये किम् अन्याय्यम् आचरितं तेन?" इति पृष्टवान् राजा।

"प्रभो! अन्याय्येन व्यवहरतां जनानां ग्रहणार्थं मां नियोजितवान् आसीत् वीरदत्तः। अहं मम कर्तव्यं श्रद्धया पालयन् बहून् दुष्टान् गृहीतवान्। किन्तु वीरदत्तः तेभ्यः उत्कोचं प्राप्य तेषां व्यवहारम् एव समर्थयन् मां निन्दन् तान् बन्धविमुक्तान् कृतवान्। अतः इदानीं ते दुष्टाः, जनाः च माम् उपहसन्ति। तेषां दुष्टानां स्वेच्छावृत्तिं द्रष्टुम् अशक्तः अहं सभासु अन्याय्यं सप्रमाणम् उद्घोषितवान्। अतः वीरदत्तः माम् उद्योगतः निष्कासितवान्। मदीया अल्पा अपि सम्पत्तिः स्वायत्तीकृता तेन" इति उक्तवान् शरच्चन्द्रः।



"हस्तात् च्युतं तम् उद्योगं पुनः इच्छति वा भवान्?" इति पृष्टवान् राजा।

"सः उद्योगः सर्वथा मास्तु मम। अहं वाणिज्यतन्त्राणि जानामि। शिक्षकवृत्त्यर्थम् आवश्यकं पाण्डित्यम् अपि अस्ति मम। अतः तद्बलेन अत्र राजधान्यां कथमपि सुखेन जीविष्यामि अहम्। यत्र न्याय्येन मार्गेण गन्तुम् अवकाशः नास्ति तादृशः उद्योगः मास्तु मम। वीरदत्तस्य स्वेच्छाचारः कीदृशः इति स्वयं गत्वा भवता ज्ञातव्यम् इति मम अपेक्षा" इति निवेदितवान् शरच्चन्द्रः।

राजा शत्रुञ्जयः एतत् अङ्गीकुर्वन् शरच्चन्द्रं ततः प्रेषितवान्। अनन्तरदिने एव वीरदत्तेन शास्यमानं प्रदेशं द्रष्टुं प्रस्थितवान् च।

वीरदत्तः महाराजं महता आदरेण सत्कृत्य महान्तं विनयम् अपि प्रदर्शितवान्। राजा गम्भीरेण स्वरेण वीरदत्तम् उक्तवान्– "गौरवविनयादीनां प्रदर्शनेन न किमपि प्रयोजनम्। भवतः प्रदेशे प्रजाः कथं सन्ति इति अहं द्रष्टुम् इच्छामि। प्रजानां कष्टसुखं तासां मुखतः एव श्रोतुम् इच्छामि। एतां वार्तां सर्वत्र प्रसारयतु" इति।

राजदर्शनार्थं प्रजानाम् अवकाशः अस्ति इति वार्ता प्रसारिता। राजानं द्रष्टुं बहवः आगतवन्तः। कश्चन कृषिकः राजानं निवेदितवान्– "महाप्रभो! मम एकरदशकमिता भूमिः अस्ति। प्रतिवर्षं योग्यं करं यच्छन् अस्मि एव। तदतिरिच्य दशभ्यः

S—F-4



वर्षेभ्यः प्रतिवर्षं विंशतिगोणीमितं धान्यं वीरदत्ताय यच्छन् अस्मि। एतावता द्विशतगोणीमितं धान्यं वीरदत्ताय दत्तम्। तावत् प्रतिदापनीयं भवता" इति।

अन्यः कश्चित् कन्यापिता आगत्य निवेदितवान्– "मम पुत्र्याः विवाहसमये वराय सहस्रं रूप्यकाणि वरदक्षिणारूपेण दत्तानि। 'एवं दानम् अपराधाय। अतः भवन्तं कारागारे स्थापयितुम् अर्हामि। यदि कारारगमनं भवान् न इच्छति तर्हि पञ्चशतं रूप्यकाणि मह्यं ददातु' इति वदति वीरदत्तः। वरदक्षिणादानं विना पुत्रीणां विवाहः क्लेशाय। विवाहसन्दर्भे उत्कोचः अपि दातव्यः भवति चेत् मादृशाः कन्यापितरः किं वा कुर्युः? मादृशाः रक्षणीयाः भवता" इति।

अपरः युवकस्य पिता राजानं नमस्कृत्य उक्तवान्– "श्रीमन्! मम पुत्रः वरदक्षिणां स्वीकर्तुं न इच्छति स्म। एतस्य वीरदत्तस्य आज्ञा यत् वरदक्षिणा स्वीकरणीया एव, तत्र कश्चन भागः मह्यं दातव्यः च इति। अधिकारिणः एतस्य विरोधम् अनिच्छन् मम पुत्रः अनिवार्यतया वरदक्षिणां स्वीकृत्य परिणीतवान्" इति।

अपरः कश्चन युवकः अग्रे आगत्य उक्तवान्-"प्रभो! वीरदत्तः उद्योगं दापयामि इति माम् उक्त्वा षड्भ्यः मासेभ्यः पूर्वं मम सकाशात् सहस्रं रूप्यकाणि स्वीकृतवान् । किन्तु अद्यावधि उद्योगं न दापितवान् । 'श्वः आगच्छतु, परश्वः आगच्छतु' इति वदन् माम् आटयन् दिनानि यापितवान् । इदानीं वदन् अस्ति यत् भवता धनम् एव न दत्तम् इति । भवता धनं दत्तम् इत्यत्र प्रमाणं किम् इति पृच्छति सः । अतः भवता कृपया न्याय-दानेन अहम् अनुग्रहणीयः" इति ।

एवम् एव वणिजः निवेदितवन्तः यत् वयं तदा तदा वीरदत्ताय उत्कोचं यच्छन्तः स्मः इति। कलाकाराः अपि उत्कोचः यच्छन्ति स्म। एवं तस्मिन् प्रदेशे सर्वत्र अक्रमः व्यवहारः।

एतत्सर्वं दृष्ट्वा राजा आश्चर्यचकितः। सः ज्येष्ठान् अधिकारिणः मेलयित्वा उक्तवान्– "वीरदत्तेन नियुक्ताः स्युः भवन्तः। तथापि प्रजाभ्यः यत् कररूपेण

दीयते ततः एव किल वेतनं प्राप्नुवन्ति भवन्तः? एवं स्थिते अपि अत्र प्रचलत् अन्याय्यं पश्यन्तः अपि मौनं स्थितवन्तः खलु भवन्तः? माम् अपि किमपि न निवेदितवन्तः। किम् एतत् उचितम्?" इति।

तदा सर्वे अधिकारिणः शिरः अवनमय्य मौनं स्थितवन्तः। किञ्चित्कालानन्तरं कश्चन अधिकारी उत्थाय उक्तवान्– "महाप्रभो! एतस्मिन् प्रदेशे वीरदत्तस्य एव सर्वाधिकारः। तं विरुध्य कोऽपि किमपि कर्तुं नार्हति। वीरदत्तं विरुध्य व्यवहृत्य शरच्चन्द्रः उद्योगात् वञ्चितः अभवत्। तस्य सम्पत्तिः अपि स्वायत्तीकृता वीरदत्तेन। शरच्चन्द्रस्य यावत् धैर्यं तावत् धैर्यं नास्ति अस्माकम्। अतः— मौनं स्थितवन्तः" इति।

अन्ते शत्रुञ्जयः वीरदत्तम् आनाय्य तद्विषये जनैः उक्तान् आरोपान् श्रावयित्वा पृष्टवान्– "एतद्विषये किं वदति भवान्?" इति।

"प्रभो! प्रजाभिः सम्भूय यत् उक्तं तत् कथं वा निराकर्तुम् अर्हामि अहम्? तथापि एकं निवेदनम्। एकवर्षात्मकः अवधिः दातव्यः मह्यम्। तदभ्यन्तरे अहम् आत्मानं परिष्कृत्य सज्जनः भविष्यामि" इति उक्तवान् वीरदत्तः।

वीरदत्तस्य प्रार्थना न अङ्गीकरणीया इति सूचितवन्तः जनाः। तथापि राजा वीरदत्ताय एकवर्षात्मकम् अवधिं दत्त्वा राजधानीं



प्रतिगतवान्।

एकवर्षाभ्यन्तरे वीरदत्तः परिष्कृतः तु न जातः। प्रत्युत, पूर्वं ये तम् आक्षिप्तवन्तः आसन् तान् कठोरं दण्डितवान् सः। अतः जनाः क्रुद्धाः जाताः। ते वीरदत्तं विरुध्य व्यवहरन्तः स्वेषु अन्यतमं नायकत्वेन निश्चित्य तं दूतरूपेण राजधानीं प्रेषितवन्तः। सः दूतः राजानं निवेदितवान्– "दुष्टः वीरदत्तः कठोरं दण्डनीयः। तस्य स्थाने अन्यः योग्यः अधिकारी नियोक्तव्यः। प्रजाः रक्षणीयाः" इति।

राजा शत्रुञ्जयः वीरदत्तं कठोरं न दण्डितवान्। किन्तु तं तस्मात् स्थानतः च्युतं कृत्वा तत्स्थाने शरच्चन्द्रं नियोजितवान्।

वेतालः एवं कथां समाप्य अवदत्– "अये राजन्! शत्रुञ्जयराजस्य व्यवहारः किम् उचितः? शरच्चन्द्रेण एकेन यदा निवेदनं कृतं तदा परीक्षार्थं निर्गतः सः, प्रजाः सर्वाः बहुधा कष्टं निवेदितवत्यः चेदपि किमर्थं तथा कृतवान्? एकवर्षस्य अवधिः दत्तः चेत् वीरदत्तः प्रतीकारं साधयेत् इति न जानाति स्म वा सः? अन्ते अपि अपराधी वीरदत्तः न कठोरदण्डनेन दण्डितः। अपि तु केवलं पदवीतः च्यावितः। किमर्थं तथा कृतवान् सः? एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "शत्रुञ्जयेन सम्यक् एव व्यवहृतम्। शरच्चन्द्रः प्रजानां हितं मनसि स्थापयन् राजानं सर्वं निवेदितवान्। अतः राजा झटिति वस्तुस्थितिज्ञानार्थं निर्गतवान्। राज्ञः पुरतः जनाः स्वस्य कष्टं केवलं निवेदितवन्तः। अन्यस्य विषये ते न चिन्तितवन्तः एव। राजानं निवेदयितुम् अपि तेषां धैर्यं न आसीत्। अन्यच्च तेषां परतया कार्यं कृतवतः शरच्चन्द्रस्य साहाय्यम् अपि न कृतवन्तः ते। एवं तत्प्रदेशीयाः जनाः स्वार्थैकचिन्तकाः भीरवः च आसन्। तेषु चैतन्यस्य उद्बोधनं कर्तुम् इच्छन् राजा वीरदत्ताय एकवर्षात्मकम् अवधिं दत्तवान्। अनन्तरं राज्ञा यथा चिन्तितं तथैव प्रवृत्तम्। 'दास्यशृङ्खलाम् अन्यः कोऽपि भञ्जयितुं न अर्हति, अस्माभिः स्वयं भञ्जनीया सा' इति ज्ञातवन्तः जनाः। तेषां भीरुतायाः स्वार्थैकपरतायाः च कारणतः एव वीरदत्तः सर्वाधिकारी जातः आसीत्। पदच्युतिकारणतः वीरदत्तः दन्तरहितः सर्पः इव जातः। तस्मै इतोऽपि अधिकं दण्डनम् आवश्यकं न आसीत्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# शुकवचनम्

कस्मिंश्चित् ग्रामे पूर्वं काचित् वृद्धा आसीत्। तस्याः अल्पा सम्पत्तिः अपि आसीत्। एका पौत्री अस्ति वृद्धायाः। गृहे ते द्वे एव निवसतः। पौत्री सम्यक् वर्धनीया इति वृद्धायाः इच्छा। अतः कठोरैः नियमैः तां पालयति स्म सा। तया बालिकया समवयस्कैः सह न क्रीडनीयम्। अन्ये बालाः अपि एतद्गृहं न आगच्छेयुः।

पौत्री गृहं कारागारं भावयति स्म। वृद्धां शुकं च विना गृहे अन्यः नास्ति एव। क्रीडाङ्गणे क्रीडतः कूर्दतः सन्तोषेण अटतः समवयस्कान् दृष्ट्वा एषा बालिका असूयाम् अनुभवति। वृद्धायै कुप्यति च। 'एषा वराकी वृद्धा यदि न भवेत् तर्हि वरम् अभविष्यत्' इति वदति सा। किन्तु वृद्धायाः पुरतः तु मौनं तिष्ठति स्म।

गृहे स्थितः शुकः प्रतिदिनम् अपि बालिकायाः वचनं शृणोति। श्रुतस्य यथोच्चारणे शुकस्य महान् उत्साहः। अतः शुकः कदाचित् वृद्धायाः उपस्थितौ एव स्वेन श्रुतं वाक्यम् उच्चारितवान्– ''एषा वराकी वृद्धा यदि न भवेत् तर्हि वरम् अभविष्यत्'' इति।

एतत् वाक्यं श्रुत्वा वृद्धा आश्चर्यचकिता। 'एतेन शुकेन एतादृशं वाक्यं कथम् अभ्यस्तम्? बालिकायाः मुखात् श्रुतं स्यात् इति वक्तुं न शक्यते। यतः बालिका सदापि मौनेन विनयेन च व्यवहरति। अतः सा एतादृशं वाक्यम् उक्तवती न स्यात्। दुष्टः शुकः एव कथमपि स्वयम् अभ्यस्तवान् स्यात्' इति चिन्तितवती वृद्धा।

अनन्तरदिने समीपगृहस्था काचित् वृद्धा एतस्याः गृहम् आगतवती। द्वे वृद्धे वार्तालापं कुर्वत्यौ आस्ताम्।

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''

तदा शुकः अभ्यासबलात् अवदत्– "एषा वराकी वृद्धा यदि न भवेत् तर्हि वरम् अभविष्यत्" इति।

एतत् वाक्यं श्रुत्वा सा प्रतिवेशिनी वृद्धा खिन्ना कुपिता च। अपमानभारेण सा मौनम् उत्थाय ततः निर्गतवती।

शुकस्य मुखात् एतदृशानि असमीचीनानि वाक्यानि यथा न आगच्छेयुः तथा करणीयम् इति आलोचितवती वृद्धा।

अतः सा समीपनिवासिनः पण्डितस्य गृहं गत्वा उक्तवती– "श्रीमन्! अस्मद्गृहीयेण शुकेन असमीचीनानि वाक्यानि अभ्यस्तानि। सः शुकः अतिथीनां पुरतः अपि तादृशानि एव वाक्यानि उच्चारयति। अतः तस्य मुखतः सर्वदा अपि उत्तमानि वाक्यानि यथा आगच्छेयुः तथा कर्तुं मार्गम् उपदिशति वा?" इति।

"तदर्थं कः क्लेशः? मद्गृहीयः शुकः उत्तमानि वाक्यानि एव जानाति। त्रिचतुराणि दिनानि भवद्गृहीयेण शुकेन सह मद्गृहीयं शुकं पञ्जरे स्थापयतु। तदा सहजतया सः उत्तमानि वाक्यानि अभ्यस्यति। सहवासकारणतः दुष्टाः उत्तमाः भवन्ति। अतः भवती चिन्तां मा करोतु" इति सूचितवान् पण्डितः।

वृद्धा एतत् अङ्गीकृतवती। अनन्तरं पण्डितेन दत्तं शुकं स्वीकृत्य गृहं गतवती। पञ्जरे शुकद्वयम् अपि स्थापयित्वा तृप्त्या निःश्वसितवती सा।

नूतनं शुकं दृष्ट्वा सन्तुष्टः अभवत् वृद्धागृहीयः शुकः। सः सन्तोषेण पक्षौ चालयन् अवदत्– "एषा वराकी वृद्धा यदि न भवेत् तर्हि वरम् अभविष्यत्" इति।

नूतनः शुकः अपि पक्षौ चालयन् अवदत्– "तथास्तु" इति।

एतत् वाक्यद्वयं श्रुतवत्याः वृद्धायाः कोपः द्विगुणितः जातः। सा कोपेन कम्पमाना पञ्जरद्वारम् उद्घाट्य तौ शुकौ बहिः प्रेषयन्ती– "मृतौ भवतां भवन्तौ" इति शापेन अनुगृहीतवती।



चन्दमामानुबन्धः-१८

# ज्ञानभाण्डागारम्

## सः कः स्यात्?

पूर्वं मथुरानगरे काचित् सुन्दरी राजनर्तकी आसीत्। नगरस्थाः प्रमुखाः सर्वे तस्याः सौन्दर्येण, कलानैपुण्येन, हावभावेन च वशीकृताः आसन्।

कदाचित् राजनर्तकी स्वभवनस्य चन्द्रशालायां स्थित्वा मार्गे गच्छन्तम् एकं तेजस्विनं संन्यासिनं दृष्टवती। संन्यासिनः मुखं तेजोमयं, गम्भीरं, सुन्दरं च आसीत्।

तद्दिने रात्रौ संन्यासी नर्तक्याः गृहस्य पुरतः स्थितस्य वृक्षस्य अधः उपविश्य विश्रान्तिसुखम् अनुभवन् आसीत्। नर्तकी परिचारिकाद्वारा वार्तां प्रेषितवती यत् गृहस्य अन्तः आगन्तव्यम् इति। किन्तु संन्यासी एतत् श्रुत्वा– "तदर्थम् इतोऽपि समयः न आगतः" इति उक्त्वा ततः निर्गतवान्।

कालः अतीतः। राजनर्तक्याः उपरि महत् चौर्यम् आरोपितम् अभवत्। दण्डनरूपेण तस्याः हस्तौ कर्तितौ। सा नगरात् बहिष्कृता च। तस्मिन् एव दिने नगरसीमायां दुःखेन अटन्तीं ताम् अन्विष्य गत्वा सः संन्यासी– "भवत्याः समीपम् आगन्तुम् इदानीं समयः प्राप्तः" इति उक्त्वा मनःशान्तिजनकानि हितवाक्यानि बोधितवान्। तानि शृण्वती सा शान्तेन मनसा प्राणान् त्यक्तवती।

एतस्यां घटनायां प्रस्तुतः संन्यासी कः? तस्याः नर्तक्याः नाम च किम्?

(उत्तरं ३६तमे पृष्ठे)

## भवन्तः जानन्ति वा?

१. क्रि.पू. ४शतके भारते सञ्चारं कृत्वा यात्रानुभवं ग्रन्थरूपेण निरूपितवान् विदेशीयः यात्रिकः कः?
२. अशोकेन प्रेषितः राजदूतः यदा श्रीलङ्कां गतः तदा तत्र कः राजा राज्यं पालयन् आसीत्?
३. तस्य राजदूतस्य नाम किम्? कदा तथा गतः सः?
४. तस्य अनन्तरं का अन्या राजदूता तं द्वीपं गताः?
५. सा आत्मना सह किम् अमूल्यम् उपायनं नीतवती?

(उत्तराणि ३६तमे पृष्ठे)




## भारतं – पूर्वम् इदानीं च

# नलन्दाविश्वविद्यालयः

तक्षशिला नलन्दा च प्राचीनौ सुविख्यातौ विश्वविद्यालयौ। एतौ अस्माकं देशस्य कीर्तिं दिगन्तं प्रापितवन्तौ। इदानीन्तने बिहारराज्ये पाटनातः दक्षिणस्यां दिशि ९० कि.मी. दूरे बर्गांवग्रामसमीपे प्राचीनायाः नलन्दायाः अवशेषाः प्राप्ताः सन्ति।

गौतमबुद्धः अत्र किञ्चित्कालं स्थित्वा अहिंसातत्त्वं बोधितवान्। महावीरः अपि एतस्मिन् प्रदेशे किञ्चित्कालं निवासं कृतवान् आसीत्। अशोकचक्रवर्तिना अत्र स्मारकस्तूपाः निर्मिताः।

सुप्रसिद्धः चीनदेशीयः यात्रिकः ह्यूयन् त्साङ्ग् क्रि.पू. ७ शतकस्य आरम्भकाले एतं विश्वविद्यालयं दृष्ट्वा, अत्रत्यं शिक्षणक्रमं, विद्यार्थिनां ज्ञानासक्तिं च स्वपुस्तके बहुधा श्लाघितवान् अस्ति। एतद्विश्व-

विद्यालयसम्बन्धिनः बहवो विषयाः तेन स्वग्रन्थे उल्लिखिताः सन्ति।

एतस्मिन् विश्वविद्यालये दशसहस्राधिकाः विद्यार्थिनः विद्याभ्यासं कृतवन्तः इति श्रूयते। किन्तु एतस्य विश्वविद्यालयस्य संस्थापकः कः इति तु स्पष्टं न ज्ञायते। पञ्चमे शतके एतत् स्थापितं स्यात् इति भाव्यते। ह्यूयन् त्साङ्ग् लिखति यत् ५ शतके तस्मिन् प्रदेशे शासनं कुर्वन् स्थितः गुप्तचक्रवर्ती नरसिंहगुप्तः बालादित्यः नलन्दायां महत् आलयं निर्माय ८० द्वादशाङ्गुलोन्नतं बुद्धविग्रहं प्रतिष्ठापितवान् इति। यदा ह्यूयन् त्साङ्ग् तत्र आगतः तदा शिलाभद्रः नाम पण्डितः विश्वविद्यालयस्य कुलपतिः आसीत्।

टिबेट्, चीना, इण्डोनेशिया, जावा इत्यादिभ्यः दूरस्थेभ्यः प्रदेशेभ्यः अपि विद्यार्थिनः अत्र आगत्य विद्याभ्यासं कुर्वन्ति स्म। विश्वविद्यालये प्रधानतया त्रीणि ग्रन्थालयभवनानि आसन्। तेषु अन्यतमं भवनं नवभिः अट्टैः युक्तम् आसीत् इति श्रूयते। तस्मिन् काले अत्यधिकग्रन्थाः अत्रैव आसन् इत्यपि श्रूयते।

एतादृशः महान् विश्वविद्यालयः कथं नष्टः इति सुस्पष्टं न ज्ञायते। अग्निना सर्वं दग्धम् इति एतावदेव ज्ञायते।

नलन्दायाः अवशेषाः गतेतिहासस्य वैभवं स्मारयन्ति। राजगिरिनामकस्य पर्वतस्य समीपे अवशेषाणां मध्ये महान् स्तूपः तु गाम्भीर्येण स्थितः दृश्यते।



### द्विचक्रिका एव गरीयसी

द्विचक्रिका-कार्यानयोः एकतरः चेतव्यः इति सूचितं चेत् प्रायः सर्वेऽपि कार्यानम् एव चिन्वन्ति। किन्तु प्राज्ञाः अभिप्रयन्ति यत् अल्पदूरं यावत् प्रयाणार्थं सर्वविधदृष्ट्या अपि द्विचक्रिका एव उचिता इति। इदानीं प्रपञ्चे ८० कोटिः द्विचक्रिकाः स्युः। तथापि अपर्याप्तता दृश्यते। द्विचक्रिकया प्रयाणं शरीरपोषकम्। वायुमालिन्यं न भवति तेन। यातायातनिरोधः अपि न भवति। अतः अल्पं दूरं गन्तव्यं चेत् उद्दिष्टस्य स्थलस्य प्राप्तौ द्विचक्रिकायाः आश्रयणम् एव उचितम्।

## र स वा र्ताः



### ग्राम्याणि औषधानि जनप्रियानि

ग्रामीणैः उपयुज्यमानानि पर्ण-त्वक्-मूलादीनां रस-लेप्य-कषायादीनि औषधानि इदानीम् अन्ताराष्ट्रियवैद्यसङ्घस्य दृष्टिम् आकृष्टवन्ति सन्ति। इदानीं दृश्यमानः आधुनिकः चिकित्साक्रमः महार्घः जातः अस्ति। कदाचित् निष्क्रियः अपि भवति। प्राचीनात् चिकित्साक्रमात् च बहुषु सन्दर्भेषु अपूर्वः परिणामः दृष्टः अस्ति। अतः वैद्यशास्त्रनिपुणाः भावयन्ति यत् प्राचीनः चिकित्साक्रमः औदासीन्येन दृष्टः यत् तत् अपराधाय इति।

# सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. कस्मिन् पुराणे पुरातनानां राज्ञां वंशावली विवृता अस्ति?

२. 'सारे जहाँ से अच्छा' इत्येतत् गीतं कः रचितवान्?

३. रामायणं भारतं च सरलया शैल्या कः सुप्रसिद्धः राजकीयनायकः पुनर्लिखितवान्?

४. प्राचीनस्य भारतीयबीजगणितग्रन्थस्य नाम किम्? तस्य ग्रन्थस्य कर्ता कः?

५. आंग्लभाषायां माकिं कति पदानि भवेयुः?

# उत्तराणि

## सः कः स्यात्?

उपगुप्तः। वासवदत्ता इति।

## सामान्यज्ञानम्

१. ग्रीकृदेशीयः मेगस्तनीस्।

२. देवानांप्रियः तिस्सः।

३. महेन्द्रः इति। (अशोकस्य पुत्रः एषः।) क्रि.पू. २५० तमे वर्षे।

४. अशोकचक्रवर्तिनः पुत्री सङ्घमित्रा।

५. बोधिवृक्षस्य मूलात् उत्पन्नं सस्यम्।

## साहित्यज्ञानम्

१. मत्स्यपुराणे।

२. महम्मद् इकबाल्।

३. सि. राजगोपालाचार्यः।

४. लीलावतीगणितम्। भास्कराचार्यः।

५. माकिं ३,००,०००.



# तिस्रः परीक्षाः

(गतसञ्चिकातः अनुवृत्ता)

आरात्रि निरन्तरं प्रयाणं कुर्वन् कृष्णवर्मा अनन्तरदिने मध्याह्नसमये कौमुदीदेशस्य पूर्वस्यां दिशि स्थितम् अरण्यं प्राप्तवान्। इतस्ततः पश्यन् सः अग्रे गतवान्। एकत्र तेन उन्नतः चन्दनवृक्षः दृष्टः। चन्दनवृक्षस्य अधः परस्परालिङ्गननिरताभ्यां सर्पाभ्यां युक्ता शिलामूर्तिः दृष्टा कृष्णवर्मणा।

कृष्णवर्मा आश्चर्यम् अनुभवन् मूर्तेः सौन्दर्यं क्षणकालं दृष्टवान्। अनन्तरं परीक्षादृष्ट्या परितः अपि दृष्टवान्। तदनन्तरम् अश्वात् अवतीर्य खड्गं कोषात् आकृष्य हस्तेन गृहीत्वा शिलामूर्तेः समीपं गतवान् सः।

तावता पृष्ठभागतः जागरूकतासूचकः ध्वनिः श्रुतः– "तिष्ठतु तावत्" इति।

कृष्णवर्मा गमनं स्थगयित्वा परिवृत्य दृष्टवान्। कश्चन तरुणः कृष्णवर्मणः समीपम् आगत्य नमस्कृत्य स्थितवान्। कृष्णवर्मा आश्चर्येण पश्यन् तं पृष्टवान्– "कः भवान्? कुतः आगतवान्? किं कुर्वन् अस्ति अत्र?" इति।

"भवतः अत्र आगमनस्य कारणीभूता व्यक्तिः अहम् एव। भवन्तम् अनुसृत्य आगतं मया" इति उक्तं कोमलस्वरेण।

एतत् श्रुत्वा स्वरस्य मृदुतां च दृष्ट्वा कृष्णवर्मा आश्चर्येण उक्तवान्– "राजकुमारी खलु भवती?" इति।

ज्योत्स्ना अङ्गीकारपूर्वकं शिरः चालयन्ती उक्तवती– "कृष्णवर्मवर्य! आम्। अहम् अस्मि कुमारी ज्योत्स्ना। पेटिकायाः उपरि चित्रितस्य चित्रस्य आधारेण भवता अत्र आगतम्। अतः तृतीयायां परीक्षायाम् अपि जयः प्राप्तः



भवता। आगच्छतु, राजधानीं प्रतिगच्छाव तावत्" इति।

कृष्णवर्मा गाम्भीर्येण तां पश्यन्– "ज्योत्स्नादेवि! पेटिकायाः उपरि यत् चित्रं चित्रितं तस्य, एतस्य प्रदेशस्य च विशेषसम्बन्धः कोऽपि अस्ति इति अहं भावयामि। तं सम्बन्धं पूर्णतः अज्ञात्वा कथं प्रतिगन्तुं शक्येत? तथा प्रतिगमनम् उचितं स्यात् वा?" इति पृष्टवान्।

एतस्य किम् उत्तरं वक्तव्यम् इति चिन्तयन्ती स्थितवती ज्योत्स्ना। तावता कृष्णवर्मा पुनरपि मृदुना स्वरेण उक्तवान्– "भवत्याः सन्देहः अवगतः मया। अग्रे गतं चेत् अपायः स्यात् इति खलु भवत्याः आशयः? किन्तु अपायस्य भीत्या प्रतिगमनं क्षत्रियस्य न शोभते। भाविनं राजानं मां प्रतिप्रेषयितुं भवत्या अपि प्रयत्नः न करणीयः। वीरपत्नीत्वं भवत्याः अपि इष्टम् एव खलु?" इति।

कृष्णवर्मा कथमपि प्रतिगन्तुं न सिद्धः इति निश्चित्य ज्योत्स्ना– "अस्तु तावत्। एतत्सम्बन्धे अहं यावत् जानामि तावत् प्रथमं वदामि। आगच्छतु, उपविशतु तावत्" इति उक्त्वा समीपस्थस्य वृक्षस्य अधः उपविष्टवती।

अनन्तरं सा कटौ वस्त्रस्य अन्तः रक्षितं तालपत्रं प्रदर्शयन्ती उक्तवती– "भवान् कथमपि न प्रतिगच्छेत् इति निश्चित्य एव अहम् अत्र आगमनसमये एतत् तालपत्रम् अपि आनीतवती। एतच्च पत्रं बहुभ्यः वर्षेभ्यः अस्मत्पूर्वजैः जागरूकतया रक्षितम्। एतस्य पृष्ठभूमौ काचित् कथा एव अस्ति। श्रावयामि, शृणोतु तावत्।

सहस्राधिकवर्षेभ्यः पूर्वम् अस्माकं वंशे हैहयवर्मा नाम शूरः, धीरः, राजा आसीत्। सः मन्त्रतन्त्रशास्त्रे अपि निपुणः आसीत्। सः बहून् राज्ञः माण्डलिकान् कृत्वा तद्द्वारा अपारां सम्पत्तिं सङ्गृहीतवान्। किन्तु दौर्भाग्यं नाम तदीयः अद्वितीयः पुत्रः अजयवर्मा अविवेकी मन्दमतिः च आसीत्। अतः हैहयवर्मणः मनसि भीतिः आसीत् यत् मम अनन्तरं राज्यलक्ष्मीः हस्तच्युता भवेत्

इति। अतः सः अपारां तां सम्पत्तिं, मन्त्रशक्तियुक्तं खड्गं च कुत्रापि रहस्यरूपेण स्थापितवान्। गुरोः साहाय्येन मन्त्रबलात् रक्षणम् अपि कल्पितवान्।

किन्तु रक्षणार्थं तेन किं तन्त्रम् आश्रितं, निधेः प्रतिप्राप्त्यर्थं कः उपायः इत्यादिकं केनापि न ज्ञायते। हैहयवर्मा तालपत्रे लिखितवान् अस्ति यत्– स च निधिः कौमुदीराज्यस्य पूर्वस्यां दिशि स्थिते अरण्ये अस्ति। सर्पयुगलयुता शिलामूर्तिः निधिं सङ्केतयति। रक्षणव्यवस्थायाः, भेदनार्थं, निधेः मन्त्रशक्तियुक्तस्य खड्गस्य च प्राप्तर्थं वा मन्त्रशक्तिः आश्रयणीया नास्ति। बुद्धिशक्त्या एव तत् साधयितुं शक्यते। धर्मपरः, वीरः, मेधावी कश्चित् एतत् कार्यं साधयितुम् अर्हति इति। तच्च तालपत्रम् अस्मद्वंशीयैः जागरूकतया एतावत्पर्यन्तं रक्षितम् अस्ति। एतस्य तालपत्रस्य विषयं केवलम् अस्मद्वंशीयाः जानन्ति। अन्यः कोऽपि न जानाति। तालपत्रस्य आधारेण अस्मद्वंशीयैः निधिः तु न प्राप्तः,तथापि तैः रहस्यं तु सर्वथा गोपितम्। अतः एतत् रहस्यं कदापि प्रकटितं न अभवत्। तालपत्रे सूचितस्य सङ्केतस्य आधारेण प्रयत्ने कृते अपि अस्मद्वंशीयाः निधिं प्राप्तुं न शक्तवन्तः। एवं स्थिते अन्येषां का कथा? एवं च सहस्राधिकवर्षेभ्यः स च निधिः स्वीकर्तारं भाग्यशालिनं प्रतीक्षमाणः



तिष्ठति'' इति।

अनन्तरं ज्योत्स्ना कृष्णवर्मणे तालपत्रं दत्तवती।

कृष्णवर्मा तत् अस्वीकुर्वन् ज्योत्स्नाम् उक्तवान्– ''भवत्या पूर्वेतिहासः उक्तः। अनन्तरकाले किं जातम् इति तु न उक्तम्'' इति।

ज्योत्स्ना तम् अभिमानेन पश्यन्ती उक्तवती– ''अस्माकं पूर्वजेन हैहयवर्मणा यथा चिन्तितं तथैव प्रवृत्तम्। सामन्तराजाः तदीयं पुत्रम् अजयशर्माणं विरुध्य युद्धं कृत्वा स्वतन्त्राः जाताः। तेषु केचन कौमुदीराज्यस्य अनेकान् भागान् स्वायत्तीकृतवन्तः अपि। किन्तु हैहयवर्मणा रहस्यरूपेण स्थापितः



निधिः तेषु केनापि न प्राप्तः। अस्मत्पूर्वजैः द्वित्रैः निधिप्राप्त्यर्थं प्रयत्नः अपि कृतः। किन्तु तेऽपि असफलाः। 'एतां शिलामूर्तिम् अपसार्य अधः सुरङ्गमार्गः भूगृहं वा स्यात् वा इति अन्वेष्टव्यम्' इति ते बहुधा प्रयत्नं कृतवन्तः इति श्रूयते। किन्तु ते एतां मूर्तिं कम्पयितुम् अपि न शक्तवन्तः।

मम पितुः पुंसन्तानः नास्ति इत्यतः तालपत्रे लिखितम् एतत्सर्वं मया ज्ञातम्। मया इतः पूर्वम् अत्र आगत्य अन्विष्टम्। तत्समये एषा मूर्तिः दृष्टा। किन्तु निध्यन्वेषणमार्गः मया अपि न ज्ञातः। अतः विवाहनियमेषु एतं विषयम् अपि योजितवती। कुतूहलम् एव अत्र कारणम्।

भवतः शक्तिसामर्थ्यं चिन्तनरीतिं च श्रुत्वा दृष्ट्वा च मया निश्चितं यत् एतत् कार्यं भवता साध्यते इति। निधिः न प्राप्तः चेदपि मन्त्रशक्तियुक्तः खड्गः प्राप्तः चेत् अलम्। तावता इष्टं सिद्धम् इति अहं भावयामि। भवान् एकाकी अश्वम् आरुह्य प्रस्थितः इति गूढचरद्वारा श्रुतवती अहम्। एतेन मया चिन्तितं यत् सङ्केतः भवता अवगतः इति। भवत् कदाचित् आपद्ग्रस्तः भवेत् इति भीत्या अहं पुरुषवेषेण भवन्तम् अनुसृतवती। मन्त्रशक्तिनिबद्धायां समस्यायां भवतः प्रेरणम् उचितं स्यात् वा, व्यर्थे प्रयत्ने भवन्तं प्रेरितवती भवेयं वा इति सन्देहः बाधते माम्। अतः एव अग्रे प्रवर्तनं मास्तु इति सूचितं मया" इति।

ज्योत्स्नायाः वचनं श्रुत्वा हसन् उक्तवान् कृष्णवर्मा– "राजकुमारि! निधिप्राप्त्यर्थं मन्त्रशास्त्रप्रावीण्यं न आवश्यकम् इति हैहयवर्मणा सूचितं विस्मृतवती वा भवती? यद्यपि निधिः मन्त्रशक्त्या बद्धः अस्ति तथापि तस्य प्राप्तौ अपायः कोऽपि न भवेत् इति भाति मम। बुद्धिमत्तया जयः प्राप्तुं शक्यते इति मम विश्वासः। हैहयवर्मणा बुद्धिपरीक्षार्थं तन्त्राणि रचितानि स्युः। महान् अपायः कोऽपि अत्र निवेशितः न स्यात् एव। अन्यच्च जयः वा भवतु पराजयः वा, प्रयत्ने कः दोषः? अतः प्रयत्नं करवाव, आगच्छतु तावत्" इति। अनन्तरं सः सर्पविग्रहं परितः

सूक्ष्मतया समग्रं परिशीलितवान्।

क्षणकालस्य अनन्तरं कृष्णवर्मा अकस्मात्– "राजकुमारि! अत्र पश्यतु" इति उक्त्वा सर्पयोः फणयोः मध्ये स्थितम् अवकाशं प्रदर्शितवान्।

तत्र अङ्गुलद्वयपरिमिते स्थले किञ्चित् उच्चता दृश्यते स्म।

"आम्। एषः कश्चन विशेषः इति तु सत्यम् एव" इति उक्तवती ज्योत्स्ना।

"एतत् कीलकस्य स्थानम् एव कुतो न स्यात्? पश्याम तावत्" इति वदन् कृष्णवर्मा ज्योत्स्नां किञ्चिद्दूरं प्रेषयित्वा तत् उच्चतायुक्तं स्थलं लक्ष्यीकृत्य बाणं प्रयुक्तवान्। तेन प्रयुक्तः बाणः लक्ष्ये सम्यक् लग्नः।

अपरस्मिन् क्षणे महता शब्देन सह विद्युतः स्फुरणं जातम्। यावत् शब्दः स्थगितः तावता सर्पमूर्तिः तत्र न आसीत्। तस्मिन् स्थले भूमेः अन्तः गन्तुं सोपानानि दृश्यन्ते स्म।

प्रयत्नस्य साफल्येन नितरां सन्तुष्टः अभवत् कृष्णवर्मा। सः ज्योत्स्नया सह सोपानमार्गेण अग्रे गतवान्।

सोपानमार्गस्य अनन्तरं लघुः पादमार्गः दृष्टः। पादामार्गेण यदा अग्रे गतं तदा विशालम् अङ्गणं प्राप्तम्। तत्र समीचीनः प्रकाशः दृश्यते स्म।

अङ्गणस्य मध्ये किञ्चन सरोवरम् आसीत्। सरोवरे सुवर्णवर्णेन प्रकाशमानानि



बहूनि कमलानि आसन्। तेषां मध्ये एकम् एव कमलं श्वेतवर्णेन आसीत्। सरोवरस्य- दक्षिणपार्श्वे कश्चन महावृक्षः दृश्यते स्म। वृक्षं परितः शिलामयी वेदिका। वेदिकायाः उपरि आवरणसहितं सुवर्णपात्रद्वयम् आसीत्। वृक्षस्य पृष्ठतः चुल्ली अन्यत् पात्रद्वयं च दृश्यते स्म।

तानि पश्यन्ती उक्तवती ज्योत्स्ना– "पुनः अत्रापि काऽपि गूढता अस्ति इति भासते" इति।

"आम्। अपूर्वाणि वस्तूनि कदापि अप्रयत्नेन न लभ्यन्ते" इति उक्त्वा क्षणकालं चिन्तयित्वा पुनः उक्तवान् कृष्णवर्मा– "प्रायः तानि कमलानि रत्नराशयः स्युः श्वेतं कमलं मन्त्रशक्तियुक्तः खड्गः स्यात्



रत्नराशिः खडगः च कथं प्राप्तव्यः इति सवर्णपात्रेषु सङ्केतः स्यात्'' इति। अनन्तरं सः वृक्षस्य समीपं गत्वा सुवर्णपात्रयोः आवरणम् अपसार्य दृष्टवान्।

एकस्मिन् पात्रे सुगन्धयुक्तानि भक्ष्याणि आसन्। अपरस्मिन् केचन तण्डुलकणाः आसन्।

कृष्णवर्मा एतानि दृष्ट्वा क्षणकालम् आलोचितवान्। वृक्षस्य पृष्ठभागे स्थितां चुल्लीं, काष्ठं, पात्रद्वयं चापि परिशीलितवान् सः।

अनन्तरं सः ज्योत्स्नां– ''निधिप्राप्त्यर्थम् आगच्छतां परीक्षार्थम् एतत्सर्वम् अस्ति इति भाति। अपरिचिते स्थले सिद्धं भक्ष्यं किमपि न खादनीयम्'' इति वदन् तण्डुलपात्रम् उन्नीय सरोवरं प्रति गन्तुम् उद्युक्तः।

''पात्रस्थं तण्डुलम् अहं प्रक्षाल्य आनयामि। पात्रम् अत्र ददातु तावत्'' इति उक्त्वा कृष्णवर्मणः हस्ततः पात्रं स्वीकर्तुम् उद्युक्ता ज्योत्स्ना।

कृष्णवर्मा तां निवारयन्– ''भवत्याः गमनं मास्तु। भवती अत्रैव तिष्ठतु। सरोवरे कोऽपि मायाप्रभावः स्यात्। अतः अहम् एव गत्वा प्रक्षाल्य आगच्छामि'' इति उक्त्वा रिक्तम् एकं पात्रम् अपि स्वीकृत्य सरोवरसमीपं गतवान्। अन्येन पात्रेण सरोवरजलम् आनीय तण्डुलपात्रे पातितवान्, तण्डुलं प्रक्षालयितुम् उद्युक्तः च।

सरोवरजलस्य स्पर्शेन तण्डुलपात्रे उष्णता उत्पन्ना, वेगेन अवर्धत च। ताम् उष्णतां सोढुम् अशक्तः कृष्णवर्मा पात्रं तत्रैव स्थापयित्वा पृष्ठतः अपसृतवान्। पात्रं सरोवरे पतितम् अभवत्।

पात्रस्य पतनेन सरोवरस्थं जलम् अदृश्यम् अभवत्। तत्र सर्वत्र नवरत्नराशयः एव दृष्टाः। कृष्णवर्मा ज्योत्स्ना च निधिराशिम् आश्चर्येण पश्यतः।

एतावता ताभ्यां स्मृतं यत् निधिराशौ मन्त्रशक्तियुक्तः खड्गः न दृश्यते इति। अतः तौ निधिदर्शनसन्तोषं विस्मृत्य खड्गस्य अन्वेषणार्थम् उद्युक्तौ जातौ।

अल्पेन एव परिश्रमेण निधीनां मध्ये स्थितं

श्वेतं पद्मं ताभ्यां दृष्टम्।

"भवता कृतेन प्रयत्नेन स्वर्णकमलानि नवरत्नराशिरूपेण परिवृत्तानि। किन्तु श्वेतं पद्मं तथैव अस्ति। एतत् श्वेतं पद्मं खड्गरूपं यथा प्राप्नुयात् तथा कर्तुं कः उपायः आश्रयणीयः इति न ज्ञायते" इति उक्तवती ज्योत्स्ना।

कृष्णवर्मा प्रत्युत्तरं किमपि अवदन् तत् श्वेतपद्मं बलात् आकृष्टवान्। तदा श्वेतपद्मस्य स्थाने कश्चन राक्षसः दृष्टिगोचरः जातः।

ज्योत्स्ना कृष्णवर्मा च राक्षसम् आश्चर्येण पश्यतः।




तदा सः राक्षसः कृष्णवर्माणं पृष्टवान्— "अये, राजकुमार! प्रयत्नेन प्राप्तं निधिं स्वीकृत्य निर्गन्तव्यं खलु भवता? तथापि मां किमर्थम् आहूतवान्?" इति।

राक्षसस्य प्रश्नं श्रुत्वा कृष्णवर्मा गाम्भीर्येण उक्तवान्— "मां धनाशाग्रस्तं सामान्यं भावयति वा भवान्? निधिः मम दृष्ट्या गौणः। अपूर्वः खड्गः प्राप्तव्यः इति उद्देशेन एव अहम् अत्र महता प्रयत्नेन आगतः" इति।

तदा राक्षसः विकटाट्टहासं कुर्वन् उक्तवान्— "अहो, महापौरुषवान् भवान्। किन्तु एतावता खड्गः न प्राप्यते। यः राजधर्मं सम्यक् जानाति तेन खड्गः प्राप्यते। अन्यच्च केवलं युद्धार्थम् उपयुज्यमानस्य खड्गस्य निमित्तम् एतावान् क्लेशः किमर्थम्? धनेन साधयितुम् अशक्यं किमपि नास्ति खलु? तादृशस्य धनस्य राशिः एव प्राप्तः अस्ति। पुनः खड्गार्थं किमर्थं वृथा श्रमः? निधिं स्वीकृत्य सुखेन जीवतु तावत्" इति।

एतत् श्रुत्वा कृष्णवर्मा मन्दहासपूर्वकम् उक्तवान्— "अहं यत् उत्तरं यच्छन् अस्मि तत् राजधर्मोपेतम् एव अस्ति। देशाभिवृद्ध्यर्थं केवलेन धनेन न किमपि प्रयोजनम्। कृषितः आहारवस्तूनि प्राप्यते। सुखेन जीवननिर्वहणार्थं यद्यत् आवश्यकं तत्सर्वं भगवता लोके सृष्टम् अस्ति। कृष्यादिकम् उपेक्षितं चेत् केवलं धनं किम्

आहारं ददाति? कृष्यादयः पोषिताः चेत् पुनः कि धनेन? वस्तुतः तु धनं मानवेषु लोभम् उत्पादयति। धनकारणतः एव जनाः राक्षसाः इव व्यावहरन्ति। धनेन सुखं लभ्यते इति तु भ्रान्तिः एव। अतः उत्तमे जीवने धनस्य पात्रं गौणम्। राजा धनाशायुक्तः भवति चेत् प्रजाः अपि धनाशाग्रस्ताः भवन्ति। अतः राजा धनाशारहितः भवेत्। प्रजाः सन्मार्गेण प्रवृत्ताः यथा स्युः तथा करणं राज्ञः आद्यं कर्तव्यम्। बलवन्तः बलहीनान् यथा न पीडयेयुः, दुष्टाः लोककण्टकानि यथा न स्युः तथा करणम् एव राजधर्मः। राजधर्मस्य पालनार्थं राजा दण्डसमर्थः स्यात्। अतः राज्ञः अत्यावश्यकं खड्गः एव'' इति।

कृष्णवर्मणः वचनं श्रुत्वा राक्षसः विनयेन तं नमस्कृत्य– ''भवादृशं महात्मानं बहोः कालतः अहं प्रतीक्षमाणः आसम्'' इति उक्त्वा आकाशे हस्तं प्रसार्य खड्गं प्राप्य, तं खड्गं कृष्णवर्मणे यच्छन्– ''एषः खड्गः यस्य हस्ते भवति तेन कदापि पराजयः न प्राप्यते। एतं खड्गं निधिं च स्वीकृत्य प्रजारञ्जकः सन् राज्यं पालयतु'' इति उक्त्वा पुनरपि नमस्कृत्य ततः अदृश्यः अभवत्।

कृष्णवर्मा खड्गं स्वीकृत्य नेत्राभ्यां स्पृष्ट्वा पुनः तं ज्योत्स्नायै यच्छन्– ''राजकुमारि! तृतीया परीक्षा अपि समाप्ता। पूर्वजानाम् एतं खड्गं स्वीकरोतु'' इति उक्तवान्।

ज्योत्स्ना खड्गस्वीकारं निराकुर्वती मन्दहासपूर्वकं– ''परीक्षाद्वारा यत् वस्तु प्राप्यते तत् जयं प्राप्तवता एव स्वीकरणीयम्। अन्यस्य तत्र नास्ति अधिकारः'' इति उक्तवती।

अनन्तरं तौ येन मार्गेण आगतं तेन एव मार्गेण राजभवनं प्रतिगतवन्तौ। चन्द्रकान्तराजः प्रवृत्तं सर्वं श्रुत्वा अतीव सन्तुष्टः अभवत्। अनन्तरं शुभे मुहूर्ते ज्योत्स्ना-कृष्णवर्मणोः विवाहः महता वैभवेन सम्पन्नः।

–(समाप्ता)





# जगन्नाथचरितम्

तस्मिन् दिने रात्रौ ललिता वार्तालापं कुर्वती पितरं निवेदितवती यत् मम पतिः एकवारं गुहास्थं देवं द्रष्टुम् इच्छति इति।

विश्वावसुः पुत्रीं कोपेन दृष्टवान्। किन्तु किमपि न उक्तवान्।

ललिता क्षणकालस्य मौनस्य अनन्तरं पितरम् पृष्टवती– "तात! अहं भवतः अद्वितीयः सन्तानः अस्मि खलु? यं भगवन्तं भवान् पूजयन् अस्ति तस्य पूजां भवदनन्तरं कः करिष्यति? भवतः जामात्रा विद्यापतिना एव खलु करणीयं तत्? एवं स्थिते तस्मै देवं प्रदर्शयामः चेत् का हानिः?" इति।

"पुत्रि! भवत्याः पतिः अस्मिन् अरण्यप्रदेशे चिरकालं तिष्ठेत् इति विश्वसिति वा भवती?" इति पृष्टवान् विश्वावसुः।

"तात! भवान् तं पुत्रवत् प्रीत्या यदि पश्येत् तर्हि सः इतः कुत्र वा गच्छेत्? अत्रैव तिष्ठेत् सः" इति उक्तवती ललिता।

"पुत्रि! भवती जानाति एव यत् विद्यापतिः भिन्ने परिसरे जातः, तदीयाः आचारविचाराः, संस्कृतिः च भिन्नाः एव इति। तथापि भवत्याः सन्तोषार्थम् अहं तस्मै देवं प्रदर्शयिष्यामि" इति वदन् विश्वावसुः पुत्र्याः शिरसि प्रीत्या हस्तं स्थापितवान्।

भगवतः पूजायाः दायित्वम् अन्यस्मै यदा दीयते तदा एव गुहां प्रति गन्तुं मार्गस्य प्रदर्शनम् इति तु सम्प्रदायः। विश्वावसुः एतस्य नियमस्य भङ्गं कर्तुं न इच्छति। अतः सः विद्यापतिम् उक्तवान्– "भवते अहं देवं

२. मूर्तिचौर्यम्।

प्रदर्शयामि चेदपि गुहां प्रति मार्गं न प्रदर्शयामि" इति। विद्यापतिः एतत् अङ्गीकृतवान्।

अनन्तरदिने विश्वावसुः यथापूर्वं सूर्योदयतः एकघण्टां यावत् पूर्वम् उत्थितवान्। देवदर्शनार्थं सिद्धः जातः च। अनन्तरं विद्यापतेः नेत्रे बद्धे। विद्यापतेः दक्षिणहस्तं गृहीत्वा गुहां प्रति प्रस्थितवान् विश्वावसुः।

विद्यापतिः वामेन हस्तेन पूर्वम् एव सर्षपान् गृहीतवान् आसीत्। सः गच्छन् तान् सर्षपान् मार्गे पातयन् गतवान्। एवं विद्यापतिः गुहापर्यन्तम् अपि सर्षपं पातितवान्।

गुहासमीपं गत्वा विश्वावसुः विद्यापतिं प्रति– "इदानीं आवां गुहासमीपम् आगतौ स्वः। शिरः अवनमय्य गुहां प्रविशतु" इति उक्त्वा गुहां प्रविश्य विद्यापतेः नेत्रयोः बन्धनम् अपनीतवान्।

विद्यपतिः नेत्रे उद्घाट्य दृष्टवान्। सर्वत्र अन्धकारः दृष्टः तेन। ततः मन्दं मन्दं प्रकाशः अपि दृष्टः। गुहायां स्थितायाः शिलामय्याः वेदिकायाः उपरि विद्यापतेः दृष्टिः पतिता। विश्वावसुः वेदिकायां पुष्पाणि अर्पयन् आसीत्।

अकस्मात् गुहायां नीलः प्रकाशः उत्पन्नः। अपरस्मिन् क्षणे वेणुं वादयतः कृष्णस्य आकारः दृष्टः विद्यापतिना। सः आनन्देन आश्चर्येण च अप्रयत्नेन एव उक्तवान्– "अहो!" इति।

"किं जातं वत्स?" इति विद्यापतेः स्कन्धे



प्रीत्या स्वस्य हस्तं स्थापयन् पृष्टवान् विश्वावसुः।

विद्यापतिः मन्दहासं प्रकटितवान्, तावदेव। किमपि न उक्तवान् सः।

''किं जातं भवतः? स्वप्नं पश्यन् इव, स्वप्ने किमपि दृष्टम् इव दृश्यते भवान्? किं प्रवृत्तम्?'' इति पृष्टवान् विश्वावसुः।

''किमपि न जातं श्रीमन्'' इति उक्त्वा पुनरपि मौनम् आश्रितवान् विद्यापतिः।

विद्यापतिः आश्चर्यपूर्वकं प्रकटितस्य ध्वनेः कारणं वक्तुं न इच्छति इति ज्ञातवान् विश्वावसुः। अतः सः पुनः किमपि न पृष्टवान्।

अनन्तरं तौ ततः प्रस्थितवन्तौ। यथा गुहां प्रति आगमनसमये नेत्रबन्धनं कृतम् आसीत् तथैव प्रतिगमनसमये अपि विद्यापतेः नेत्रयोः बन्धनं कृतवान् आसीत् विश्वावसुः।

प्रत्यागतवन्तं पतिं पृष्टवती ललिता– ''गुहायां भवता किं दृष्टम्?'' इति।

तदा विद्यापतिः वस्तुस्थितिं गोपयन् उक्तवान्– ''अन्धकारमय्यां तस्यां गुहायां किं वा दृश्येत? विशिष्टं किमपि न दृष्टं मया'' इति।

गुहायाम् अलौकिकम् अपूर्वं च यत् दृश्यं दृष्टं तद्विषये पत्नीं प्रति कथनम् अनुचितम् इति भावयति विद्यापतिः। अतः तत् रहस्यम् आत्मनि एव गोपितवान् सः।

'दैवप्रेरणया महाराजः इन्द्रद्युम्नः भाविजनानां हितार्थं महत् कार्यं साधयितुं दीक्षां गृहीतवान्। तदङ्गतया च मयि महत्





दायित्वम् आरोपितवान् सः। एवं कार्यसाधनार्थं प्रस्थितः अहं कथमपि अत्र स्थितः, ललितां परिणीतवान् चापि। महाराजस्य कार्यस्य साधनं मम आद्यं कर्तव्यम्। तया दृष्ट्या ललितां प्रति गुहायां प्राप्तस्य अनुभवस्य अकथनम् एव वरम्' इति आलोचितवान् विद्यापतिः।

पुनः अन्यः विचारः आगतः तस्य मनसि– 'ललितां प्रति अकथनेन समस्या परिहृता तु न भवति। विश्वावसुना पूज्यमानः देवः श्रीकृष्णः एव। राजधानीं प्रति एतस्याः मूर्तेः नयनं मम कर्तव्यम्। किन्तु मूर्तिम् एवं नयामि चेत् अहं विश्वासद्रोही न भवेयं वा? विश्वावसोः वञ्चनं किम् उचितं स्यात्' इति।

'किं कृतं चेत् उचितं स्यात्' इति गाम्भीर्येण चिन्तयति विद्यापतिः। अत्रान्तरे अन्योऽपि विचारः मनसि आगतः– 'विश्वावसुः मयि पूर्णतः विश्वासं न स्थापितवान् आसीत्। अतः एव सः नेत्रबन्धनपूर्वकं मां गुहां नीतवान्। एवं स्थिते गुहायां स्थिता मूर्तिः मया नीता चेत् न कोऽपि अधर्मः' इति।

एवम् आदिनं चिन्तयति विद्यापतिः। चिन्तनकारणतः दिने आहारादिषु अपि अनासक्तिः। रात्रौ च निद्रा न प्राप्यते। किन्तु केवलेन निरन्तरचिन्तनेन समस्यायाः परिहारः तु न भवति खलु?

विद्यापतौ जातम् एतत् परिवर्तनं दृष्ट्वा ललिता नितरां खिन्ना। 'विद्यापतेः चिन्तायाः किं कारणं स्यात्' इति आलोचयति सा। 'विद्यापतिः नागरिकाणि सुखसाधनानि स्मरन् स्यात् वा? तेन अहं परिणीता यत् तेन सः खिन्नः स्यात् वा?'

विद्यापतेः चिन्तायाः मूलं कारणं ज्ञातुम् अशक्ता सा कदाचित् तम् एव 'चिन्तायाः कारणं किम्' इति पृष्टवती।

''नागरिकाणि सुखसाधनानि अत्र न सन्ति इति तु सत्यम् एव। किन्तु तेन अहं किञ्चिदपि न खिन्नः। मम मातापितरौ नगरे स्तः। अत्र आगतस्य मम बहूनि दिनानि अतीतानि। मम वार्ताम् अप्राप्य तौ चिन्ताक्रान्तौ स्याताम्। वृद्धयोः मातापित्रोः



उक्तवती– "अहं भवता सह आगन्तुम् इच्छामि। किन्तु एवं गच्छामि चेत् वृद्धस्य मम पितुः योगक्षेमं कः पश्येत् इत्येव मम चिन्ता" इति।

"भवत्याः चिन्तनं युक्तम् एव। पितरं त्यक्त्वा गमनम् उचितं न भवेत्। अतः भवती अत्रैव तिष्ठतु। मम गमनार्थम् अनुज्ञां ददातु। मातापितरौ दृष्ट्वा, तयोः खेदं शमयित्वा अचिरात् एव प्रत्यागमिष्यामि" इति उक्तवान् विद्यापतिः।

"भवान् अचिरात् एव प्रत्यागमिष्यति इत्येतत् सत्यं वा?" इति आतङ्कयुक्तेन स्वरेण पृष्टवती ललिता।

"भवतीं विना अहं किं सुखेन तिष्ठेयम्?" इति प्रतिप्रश्नं कृतवान् विद्यापतिः। एतेन ललितायाः आतङ्कः अपगतः।

"एवं तर्हि गत्वा अचिरात् एव प्रत्यागच्छतु भवान्। मम श्वश्रूं श्वशुरं च सूचयतु यत् आशीर्वादं प्राप्तुम् अल्पे एव काले अहम् आगमिष्यामि इति" इति उक्तवती ललिता।

ललिता पत्युः इच्छां पितरं निवेदितवती। विश्वावसुः अपि अनुमतिं दत्तवान्। विद्यापतये बहूनि उपायनानि दातुम् इष्टवान् विश्वावसुः।

किन्तु विद्यापतिः एतत् निराकुर्वन् उक्तवान्– "एषः उपायनानां नयनार्थं न समयः। यदा ललितया सह गमिष्यामि तदा

सेवा योगक्षेमनिर्वहणं च पुत्रस्य मम कर्तव्यं खलु? किन्तु भवतीम् अत्र त्यक्त्वा गन्तुम् अपि मम इच्छा नास्ति। यदि अहं मया सह भवतीं नयेयं तर्हि सर्वे प्रायः भवतीम् आश्चर्येण पश्येयुः। अन्यच्च भवती गच्छति चेत् भवतीं प्राणसमां भावयतः भवत्याः पितुः का अवस्था स्यात्? इदानीं किं करणीयम् इति न ज्ञायते। किङ्कर्तव्यतामूढः अस्मि अहम्" इति उक्तवान् विद्यापतिः।

"यावत् भवतः प्रीतिः मयि भवति तावत् अहं कस्मिंश्चित् अपि विषये चिन्तां न करोमि। जनाः मद्विषये किमपि वा चिन्तयन्तु नाम। तेन मम न काऽपि हानिः" इति उक्त्वा अश्रूणि स्रावयन्ती मार्जयन्ती च पुनः

उपायनानि अवश्यं नष्यामि। इदानीं गत्वा मातापितरौ विवाहवार्तां निवेदयामि" इति।

विश्वावसुः एतत् अङ्गीकृतवान्। जामातुः प्रयाणार्थम् उत्तमस्य अश्वस्य व्यवस्थां कृतवान् सः।

विश्वावसोः ललितायाः च अनुज्ञां प्राप्य विद्यापतिः अश्वम् आरूढवान्, राजधानीं प्रति प्रस्थितः च। पतिः यावत् दृश्यते तावद्दूरम् अश्रुपूर्णनेत्रा ललिता पश्यन्ती स्थितवती।

केभ्यश्चित् दिनेभ्यः पूर्वं विद्यापतिः गुहां प्रति गच्छन् सर्षपान् पातितवान् आसीत् खलु? ते सर्षपाः इदानीम् अङ्कुरिताः आसन्। अतः गुहागमनमार्गः स्फुटं दृश्यते स्म। विद्यापतिः विना क्लेशं गुहां प्राप्तवान्।

गुहायाः मुखद्वारे महाशिलाः दृश्यन्ते स्म। विद्यापतिः अश्वात् अवतीर्य मन्दं गुहायाः अन्तः गतवान्। गुहायां तेन पुनरपि दिव्यः अनुभवः प्राप्तः।

सः मनसि एव भगवन्तं क्षमां प्रार्थितवान्– 'देव! भवति विश्वस्य अहं यत् उचितम् इति भासते तत् कुर्वन् अस्मि। अज्ञानतः मया कोऽपि दोषः आचरितः चेत् कृपया अहं क्षन्तव्यः। भगवन्! मां रक्षतु कृपया' इति।

अनन्तरं सः शिलामय्यां वेदिकायां स्थितां मूर्तिम् उन्नीय नेत्राभ्यां भक्त्या स्पृष्टवान्। ततः मूर्तिं स्यूते स्थापयित्वा गुहातः बहिः आगत्य अश्वम् आरूढवान् च।

यद्यपि मूर्तिः चौर्येण नीयमाना अस्ति तथापि आत्मनि हीनभावनां न अनुभवति विद्यापतिः। 'पवित्रे कार्ये अहम् उद्युक्तः अस्मि। दैवप्रेरणया एव सर्वं प्रचलति। देवः मद्द्वारा सर्वं कारयति। अतः पापपुण्ययोः लेपः सर्वथा नास्ति मम' इति चिन्तयति विद्यापतिः।

ततः राजधानीं गन्तुं योग्यं मार्गं न जानाति विद्यापतिः। तथापि सः भगवन्तं प्रार्थयन् युक्तम् इति तर्किते मार्गे अश्वं प्रेरितवान्। अश्वः वेगेन अग्रे अधावत्।

–(अनुवर्तते)



# प्रत्युत्पन्नमतिः

विजयपुरस्य आस्थाने रामदेवः नाम ऐन्द्रजालिकः आसीत्। सः न केवलम् इन्द्रजालनिपुणः, अपि तु उपायचतुरः अपि।

कदाचित् राजा चिन्तितवान् यत् राजभवने यानि आभरणानि सन्ति तेषां प्रदर्शिनी आयोजनीया, प्रजाः तानि पश्येयुः इति। अतः प्रदर्शिनी आयोजिता, राजभवनस्थानि सर्वाणि अमूल्यानि आभरणानि तत्र स्थापितानि।

रामदेवः स्वमित्रेण हरीशेन सह प्रदर्शिनीं द्रष्टुं गतवान्। हरीशः रक्षकाणां दृष्टितः आत्मानं रक्षन् एकम् अमूल्यं रत्नहारं चोरितवान्। रामदेवः एतत् दृष्टवान् एव। तस्य मनसि इदानीं द्वैधीभावः– 'अहं राज्ञः सेवकः। चौर्यं दृष्ट्वा अपि मौनं तिष्ठामि चेत् विश्वासघातुकः भविष्यामि। किन्तु चौर्यं प्रकटीकरोमि चेत् मित्रं हरीशः बद्धः भविष्यति। अतः इदानीं किं करणीयम्?' इति।

सः अन्ते एकम् उपायं चिन्तितवान्। सः प्रदर्शिनीं द्रष्टुम् आगतान् उद्दिश्य– "मित्राणि! अहम् इदानीम् एकं कौशलं प्रदर्शयामि। पश्यन्तु, इदानीं प्रदर्शिनीतः एकम् अमूल्यं हारम् अदृश्यं कृत्वा, तं हारं मम मित्रस्य कोषतः आनेष्यामि" इति उक्त्वा आकाशे हस्तं चालितवान्। मित्रस्य कोषतः अमूल्यं हारं निष्कासितवान् च। जनाः आश्चर्यचकिताः सन्तुष्टाः च सन्तः करताडनं कृतवन्तः।

रामदेवस्य मित्रं हरीशः स्वेदेन आर्द्रः। प्रत्युत्पन्नमतिः रामदेवः अपमानतः यत् रक्षितवान् तदर्थं मनसि एव कृतज्ञतां समर्पितवान् सः।





# प्रतिवञ्चनम्

प्राचीने काले ग्रीस्देशे कश्चन वृद्धः पत्न्या सह निवसति स्म। कदाचित् सः वृद्धः पत्नीम् उक्तवान्– "भोः, भवती अस्माकं धेनुं विक्रीय आगच्छतु। अहम् एव गच्छेयम्। किन्तु मम पादे वातबाधा। अहं चलितुं न शक्नोमि" इति।

धेन्वा सह विपणिं प्रस्थितवती वृद्धा। एवं धेन्वा सह गच्छन्तीं वृद्धां त्रयः चोराः दृष्टवन्तः। 'अल्पेन मूल्येन कथमपि धेनुः क्रेतव्या' इति निश्चितवन्तः ते तदर्थम् उपायम् अपि चिन्तितवन्तः।

एकः चोरः वृद्धायाः समीपं गत्वा पृष्टवान्– "अम्ब! एषा अजा विक्रयणार्थम् एव खलु नीयमाना अस्ति? त्रिंशद्रूप्यकेभ्यः मह्यम् एतां ददाति वा?" इति।

वृद्धा निराकरणपूर्वकं शिरः हस्तं च चालयन्ती– "गच्छतु भोः। महावणिक् इव आगतः अयं वराकः" इति तर्जयित्वा अग्रे गतवती।

वृद्धा किञ्चिद्दूरम् अग्रे गता। तावता द्वितीयः चोरः आगत्य तां पृष्टवान्– "अम्ब! कुत्र गच्छन्ती अस्ति भवती?" इति।

"विपणिं प्रति। एषा तत्र विक्रेतव्या मया" इति उक्तवती वृद्धा।

"एवं वा? तर्हि पञ्चविंशतिं रूप्यकाणि दास्यामि। एताम् अहम् एव क्रेतुम् इच्छामि" इति उक्तवान् सः चोरः।

"अये मूर्ख! मम धेनुः प्रभूतं क्षीरं ददाति, न तु वन्ध्या। एतां भवान् अजामूल्येन क्रेतुम् इच्छति खलु?" इति उक्तवती वृद्धा।

सः द्वितीयः चोरः वृद्धाम् आश्चर्येण पश्यन् उक्तवान्– "भवती वृद्धा। अतः भवत्याः दृष्टिशक्तिः मन्दा जाता स्यात्। अन्यथा अजां धेनुं कथं वा वदेत् भवती?" इति।

"ग्रीस्देशीया जानपदकथा"



सा वृद्धा चोरम् एकवारं दृष्ट्वा– "स्यात् नाम। मम दृष्टिः मन्दा जाता स्यात्" इति वदन्ती धेन्वा सह अग्रे गतवती।

चिन्तामग्ना वृद्धा यदा अग्रे गतवती तदा तृतीयः चोरः तस्याः सम्मुखम् आगतः। ताम् उक्तवान् सः– "अम्ब! एषा अजा विक्रीयते वा भवत्या? तर्हि विंशतिं रूप्यकाणि स्वीकृत्य एतां मह्यम् एव ददातु" इति।

"भवान् अपि एताम् अजां वदति खलु? मार्गे इन्द्रजालप्रभावः कोऽपि जातः स्यात् वा? यतः गृहात् प्रस्थानसमये मया सह धेनुः एव आसीत्" इति उक्तवती वृद्धा।

"पित्तज्वरेण पीडिता स्यात् भवती। एषा अजा एव, न तु धेनुः। विंशतिरूप्यकेभ्यः एतां मह्यं विक्रीय गृहं गत्वा विश्रान्तिसुखम् अनुभवतु। वृथा किमर्थम् अग्रे गमनम्?" इति उक्तवान् सः तृतीयः चोरः।

"प्रथमं मिलितेन त्रिंशत् रूप्यकाणि दीयन्ते इति उक्तम् आसीत्। अतः विंशतिरूप्यकेभ्यः सर्वथा न ददामि। एतां यदि क्रेतुम् इच्छति तर्हि त्रिंशत् रूप्यकाणि ददातु" इति उक्तवती वृद्धा।

"एतस्याः मूल्यं त्रिंशत् रूप्यकाणि सर्वथा न। तथापि वृद्धा भवती पृच्छति इत्यतः क्रीणामि" इति वदन् सः तृतीयः चोरः त्रिंशत् रूप्यकाणि दत्तवान्।

एवम् अजामूल्येन धेनुं विक्रीय गृहम् आगतवती वृद्धा। तत्र सा पतिं प्रवृत्तं समग्रं निवेद्य तेषां त्रयाणाम् आकारादिकम् अपि निवेदितवती। एतत्सर्वं श्रुत्वा सः वृद्धः ज्ञातवान् एव यत् ते वञ्चकाः पार्श्वग्रामीणाः उद्धताः तरुणाः एव इति। "यत् प्रवृत्तं तद्विषये चिन्तनेन कः लाभः? अग्रे यथोचितम् अहं करिष्यामि" इति उक्तवान् वृद्धः।

वृद्धः गृहात् निर्गत्य समानाकारकौ द्वौ शशौ क्रीत्वा आगतवान्। एवं शशं गृहे पञ्जरे स्थापितवान्। अपरं पञ्जरे स्थापयित्वा आत्मना सह नयन्– "भोः, अद्य अतिथयः भोजनार्थम् आगमिष्यन्ति। मृदव्यः रोटिकाः, पायसं, बकमांसेन विशेषपाकं च सज्जीकरोतु। प्रत्यागतः अहं यदा कः पाकः इति पृच्छामि तदा भवत्या वक्तव्यं यत् यद्यत

शशद्वारा सूचित तत् सर्वं सिद्धम् अस्ति इति" इति पत्नीं सूचयित्वा गृहात् निर्गतवान्।

वृद्धः पार्श्वग्रामं यदा गतः तदा ते त्रयः वञ्चकाः तरुणाः सुरापानं कुर्वन्तः सन्तोषेण जल्पन्तः आसन्। एतं वृद्धं दृष्ट्वा उपहासयुक्तेन स्वरेण ते उक्तवन्तः– "अरे वृद्ध! भवतः पत्नी एतावत् अपि न जानाति यत् धेनुः का, अजा च का इति" इति।

"किं करोमि भोः। एषु दिनेषु तस्याः बुद्धिः सर्वथा नष्टा अस्ति। किन्तु अपूर्वस्य पाकस्य सज्जीकरणे तु सा निपुणा" इति उक्तवान् वृद्धः।

"एवं वा? भाग्यशाली भवान्!" इति उक्तवन्तः ते युवकाः। वृद्धः चिन्तनम् अभिनयन् क्षणकालस्य अनन्तरं स्वगतम् उक्तवान्– "अद्य कीदृशः पाकः भवतु? .... पायसं, मृद्व्यः रोटिकाः च भवन्तु .... बकमांसस्य विशेषपाकः अपि भवतु ...." इति। अनन्तरं शशं पञ्जरतः बहिः आनीय– "अये शशमित्र! त्वरया गृहं गत्वा गृहस्वामिनीं वदतु यत् अद्य पायसं, मृद्व्यः रोटिकाः, बकमांसेन विशेषपाकः च भवतु इति" इति उक्त्वा शशं त्यक्तवान् सः।

बन्धनमुक्तितः सन्तुष्टः शशः क्षणमात्रेण ततः अदृश्यः अभवत्। एतत् दृष्ट्वा ते वञ्चकाः तरुणाः आश्चर्यचकिताः। एकः वृद्धं पृष्टवान्– "एषः शशः वस्तुतः अपि



वार्तां भवद्गृहं प्रापयति वा?" इति।

"कुतो न? बाल्यतः अपि सः पालितः मया। एतादृशानि कार्याणि सर्वदा अपि करोति सः। अद्य भवन्तः अपि मम गृहं भोजनार्थम् आगच्छन्तु। मम कथनं सत्यं वा न वा इति तदा ज्ञायते" इति उक्तवान् वृद्धः।

वृद्धस्य वचनं सत्यम् उत न इति ज्ञातुम् इच्छन्तः ते त्रयः अपि वृद्धेन सहैव प्रस्थितवन्तः। गृहं प्राप्य वृद्धः पत्नीं पृष्टवान्– "अद्य कः पाकः?" इति।

"शशेन यद्यत् सूचितं तत्सर्वं सिद्धम् अस्ति" इति उक्तवती वृद्धा।

अनन्तरं ते भोजनार्थम् उपविष्टवन्तः। वृद्धः शशं प्रति यद्यत् उक्तवान् आसीत्

तत्सर्वम् आसीत् अत्र। ते वञ्चकाः एतेन परमाश्चर्यं प्राप्तवन्तः। "एतस्य शशस्य विक्रयणं करोति वा?" इति वृद्धं पृष्टवन्तः च।

"महत्या प्रीत्या पालितः मया एषः। एवं स्थिते एतस्य विक्रयणं कथं वा शक्येत?" इति उक्तवान् वृद्धः।

ते वञ्चकाः शशार्थम् अधिकं धनं दास्यामः इति उक्तवन्तः। दशसहस्र रूप्यकपर्यन्तं मूल्यं दातुं सिद्धाः अभवन् ते। तथापि वृद्धः शशस्य विक्रयणं कर्तुं सिद्धः न जातः। तदा वृद्धा उक्तवती– "एते बालकाः शशे नितराम् आसक्ताः दृश्यन्ते। भवतः अपि धनस्य आवश्यकता अस्ति एव। अतः विक्रयणम् अङ्गीकरोतु तावत्" इति।

तदा वृद्धः तेभ्यः दशसहस्रं रूप्यकाणि स्वीकृत्य गृहे बद्धं शशं दत्तवान्। शशं स्वीकृत्य ते वञ्चकाः स्वग्रामं प्रस्थितवन्तः। मार्गे ते चिन्तितवन्तः यत् गृहस्वामिनीं प्रति शशद्वारा कस्य कस्य खाद्यस्य सज्जीकरणार्थं वार्ता प्रेषणीया इति। अनन्तरं तत्सर्वं शशम् उक्त्वा हस्तविमुक्तं कृतवन्तः। शशः निमेषाभ्यन्तरे ततः अदृश्यः अभवत्।

ते स्वगृहं गतवन्तः। शशेन काऽपि वार्ता न प्रापिता आसीत्। वृद्धेन वयं वञ्चिताः इति चिन्तितवन्तः ते। वृद्धस्य गृहं गत्वा त कठोरैः शब्दैः निन्दितवन्तः ते।

"एवं तर्हि शशः वायुरूपेण परिवृत्तः अभवत्। अत्र सन्देहः एव नास्ति" इति उक्तवान् वृद्धः।

"शशः कथं वा वायुरूपं प्राप्नुयात्? किम् उच्यमानम् अस्ति इति स्वयं जानाति वा भवान्?" इति कोपेन पृष्टवन्तः ते वञ्चकाः।

तदा वृद्धः हसन् उक्तवान्– "पश्यन्तु वत्साः! धेनुः अजारूपेण परिवृत्ता भवितुम् अर्हति चेत् शशः कुतो वा वायुरूपेण परिवृत्तः न भवेत्?" इति।

इदानीं तैः ज्ञातं यत् पूर्वम् आत्मना कृतस्य वञ्चनस्य प्रतिवञ्चनं कृतं वृद्धेन इति। अतः ते शिरः अवनमय्य मौनं ततः निर्गतवन्तः।





# हानेः परिहारः

**श**रवणपुरे पूर्वं मणिकण्ठः नाम कृषिकः निवसति स्म। सः कदाचित् स्वगृहस्य पृष्ठतः पोतकीलताम् आरोपितवान्। सः प्रतिदिनं तस्य जलसेचनं करोति। समये गोभरम् अपि ददाति। अल्पे एव काले लता प्रवृद्धा। लतायाः काश्चन कोमलाः शाखाः प्राकारम् अतिक्रम्य प्रसृताः।

तस्मिन् एव ग्रामे विमलः नाम कृषिकः निवसति स्म। सः दृढकायः धनिकः च। कदाचित् विमलस्य अजा मणिकण्ठेन आरोपितायाः लतायाः कांश्चन पल्लवान् अखादत्। एतत् दृष्टं मणिकण्ठेन। मणिकण्ठः पाषणक्षेपणेन ताम् अजां ततः दूरं प्रेषितवान्।

अनन्तरं विमलं दृष्ट्वा एतां वार्तां निवेद्य– "भोः विमलवर्य, भवान् स्वस्य अजां गृहे बध्नातु, चारणार्थम् अरण्यं वा नयतु। किन्तु एवं स्वेच्छया मा त्यजतु" इति सूचितवान्।

विमलः एतत् श्रुत्वा कुपितः। तथापि कोपं निगृह्णन् सः मौनं स्थितवान्। एतदनन्तरं पुनः द्वित्रवारम् अजा मणिकण्ठस्य सस्यं खादितुम् आगता। मणिकण्ठः अजां शपन् पाषाणक्षेपणेन तां दूरं प्रेषितवान्।

एकदा प्रातःकाले एव विमलस्य अजा पोतकीलताम् पूर्णतः अखादत्। एतत् दृष्ट्वा नितरां कुपितः मणिकण्ठः कोपेन अन्धः भूत्वा समीपस्थं परशुम् उन्नीय अजां लक्ष्यीकृत्य क्षिप्तवान्। परशुः अजायाः शिरसि लग्नः। अजा पादौ चालयन्ती क्षणाभ्यन्तरे प्राणान् अत्यजत्।

अजायाः मरणस्य वार्ता श्रुता विमलेन। सः मणिकण्ठस्य गृहं गत्वा कोपेन



उक्तवान्– "भोः, मम अजा सम्यक् पुष्टा आसीत्। शतं रूप्यकाणि दत्त्वा सुदूरात् ग्रामतः क्रीत्वा आनीता आसीत् एषा। वस्तुतः एतस्याः मूल्यम् इदानीम् अधिकम् एव भवेत्। तथापि अहम् अधिकं न पृच्छामि। मया शतं रूप्यकाणि दत्त्वा क्रीतम्। अतः भवान् अपि तावदेव ददातु तावत्" इति।

मणिकण्ठः तु दश रूप्यकाणि दातुं सिद्धः अस्ति। 'अन्याम् अजाम् एव क्रीत्वा दातुं सिद्धः अस्मि' इत्यपि उक्तं तेन। किन्तु विमलस्य तु एकम् एव वचनं– "मह्यं शतं रूप्यकाणि दातव्यानि एव भवता" इति।

'इदानीं विपण्याम् उत्तमा अजा दशभिः रूप्यकैः क्रेतुं शक्या। अतः एषः विमलः एतस्यै अजायै शतं रूप्यकाणि दत्तवान् इति तु सर्वथा असत्यम्। अहं निर्धनः इत्यतः सामर्थ्यहीनः। अतः मां भाययन् एषः वञ्चनामार्गेण अधिकं धनं प्राप्तुम् इच्छति'इति आलोचितवान् मणिकण्ठः।

अतः क्रुद्धः मणिकण्ठः विमलम् उक्तवान्– "भवान् धनिकः कृषिकः स्यात् नाम, किन्तु अहं भवत्तः भीतः न भवामि। एकां काकणिकाम् अपि न दास्यामि भवते। यत् कर्तुम् इच्छति तत् करोतु भवान्" इति।

विमलः ग्रामस्य भूस्वामिनः समीपं गत्वा 'मणिकण्ठः मम अजां परशुना मारितवान्' इति निवेद्य– "ततः शतं रूप्यकाणि मह्यं दापनीयानि भवता" इति प्रार्थितवान्।

भूस्वामी न व्यवहारचतुरः। कः अपराधी, कः निरपराधी इति निर्णेतुं सामर्थ्यं नास्ति तस्य। यः यत् वदति तत् सत्यं भावयति सः। कश्चित् उच्चस्वरेण किमपि वदति चेत् एषः भीतः भवति।

विमलस्य कथनं श्रुत्वा भूस्वामी भटद्वारा मणिकण्ठम् आनायितवान्। एतद्विषये तदीयम् अभिप्रायं पृष्टवान् च।

"मया बुद्ध्या अजा न मारिता। मम गृहस्य पृष्ठतः आरोपितस्य सस्यस्य खादने उद्युक्ताम् अजां लक्ष्यीकृत्य मया कोपवशात् परशुः क्षिप्तः। परशुः अजायाः शिरसि लग्नः। तेन अजा मृता" इति उक्तवान्



मणिकण्ठः।

"दोषः भवतः एव। अतः शतं रूप्यकाणि विमलाय दातव्यानि भवता" इति उक्तवान् भूस्वामी।

"मम कः दोषः अत्र? यदि तत् सस्यं न स्यात् तर्हि अजा मम गृहं न आगमिष्यत्। मया सा मारिता न अभविष्यत् च। अतः सर्वस्य कारणं तत् सस्यम् एव" इति उक्तवान् मणिकण्ठः।

"युक्तम् उक्तं भवता। किमर्थं भवता तत् सस्यम् आरोपितम्?" इति पृष्टवान् भूस्वामी।

मणिकण्ठः क्षणकालम् आलोच्य उक्तवान्– "मम गृहस्य पुरतः निवसन् केशवः कदाचित् 'एतां गृहस्य समीपे आरोपयतु' इति उक्त्वा पोतकीलतां दत्तवान्। सा मया गृहस्य पृष्ठतः आरोपिता। इदानीं भवान् एव वदतु– दोषः कस्य?" इति।

भूस्वामी केशवम् एव दोषकारिणं मन्यमानः तं स्वगृहम् आनायितवान्। तं पृष्टवान् च– "भवता मणिकण्ठाय पोतकीलता दत्ता इति श्रुतम्। किम् एतत् सत्यं वा?" इति।

"आं श्रीमन्! मया पोतकीलता दत्ता इति तु सत्यम् एव" इति उक्तवान् केशवः।

"भवता मणिकण्ठाय पोतकी दत्ता। मणिकण्ठः तां स्वगृहस्य पृष्ठतः आरोपितवान्। तां पोतकीं खादितुम् अजा आगता। अजां लक्ष्यीकृत्य परशुः क्षिप्तः मणिकण्ठेन। अजा मृता। यदि भवान् पोतकीं दत्तवान् न स्यात् तर्हि एषा दुर्घटना न अभविष्यत्। अतः भवान् एव अत्र दोषी" इति उक्तवान् भूस्वामी।

"श्रीमन्! अहं कथं वा दोषी भवेयम्? अजा मया न मारिता । दोषिणः साहाय्यम् अपि मया न कृतम्" इति उक्तवान् केशवः ।

"अये! उचितानुचितस्य दोषादोषस्य वा निर्णेता अहम् अस्मि । मम व्यवहारे दोषं पश्यति वा भवान्?" इति कोपेन गर्जितवान् भूस्वामी ।

तदा भीत्या कम्पमानः केशवः



उक्तवान्– "श्रीमन्! मम दोषः अत्र किञ्चिदपि नास्ति। समग्रः दोषः सीतारामस्य एव" इति।

"सीतारामस्य इति? कः सः सीतारामः?" इति पृष्टवान् भूस्वामी।

"सीतारामः अस्माकं ग्रामे वैद्यः। मम शरीरे कदाचित् महती कण्डूतिः उत्पन्ना। तस्याः निवारणार्थं वैद्येन सूचितं यत् वर्षं यावत् भवता पोतकीलतया निर्मितः पाकः स्वीकरणीयः इति। सः एव स्वगृहे स्थितां पोतकीं मह्यं दत्तवान्। तत्रैव कञ्चन भागम् अहं मणिकण्ठाय दत्तवान्। एवं दोषः सीतारामस्य एव" इति उक्तवान् केशवः।

भूस्वामी तत्क्षणे एव वैद्यं सीतारामं तत्र आनायितवान्। वैद्यं दृष्ट्वा उक्तवान् भूस्वामी– "किं भोः, चिकित्सामात्रं भवता करणीयं खलु?। आगतानां रोगिणां परीक्षां कृत्वा उचितस्य औषधस्य दानं खलु भवतः कर्तव्यम्? तां विहाय पोतक्याः दानं कृतं भवता। किम् एतत् उचितम्?" इति।

पोतकीसस्यस्य दानेन कः दोषः जातः इति न ज्ञातं सीतारामेण। सः आश्चर्येण भूस्वामिनं पृष्टवान्– "इदानीं तेन किं जातम्?" इति।

"महती हानिः जाता किल भोः। भवता केशवाय पोतकी दत्ता। केशवः मणिकण्ठाय तत्र एकं भागं दत्तवान्। मणिकण्ठेन वर्धिता पोतकी विमलस्य अजया खादिता। तेन कुपितः मणिकण्ठः अजाम् उद्दिश्य परशुं क्षिप्तवान्। अजा मृता। सा च अजा सुदूरस्थात् प्रदेशात् शतं रूप्यकाणि दत्त्वा आनीता आसीत् विमलेन। इदानीं विमलेन या हानिः अनुभूता तस्याः परिहारार्थं धनं कः ददाति? भवता पोतकी दत्ता यत् तदेव सर्वस्य मूलम्। अतः भवतः एव दोषः अत्र" इति उक्तवान् भूस्वामी।

'वास्तविकः दोषः तु विमलस्य एव। अजायाः पालनं सम्यक् अकुर्वन् सः पोतकीनाशार्थं हेतुः जातः। अजायाः मारणं प्रमादवशात् जातम्। विमलः भूस्वामिनः स्वभावं जानन् धाष्ट्र्येन व्यवहरन् लाभं सम्पादयितुम् इच्छति। मणिकण्ठः केशवः च

आत्मरक्षणार्थं मयि दोषम् आरोपितवन्तौ' इति आलोच्य चतुरः सः सीतारामः एकम् उपायं चिन्तितवान्।

"श्रीमन्! केवलम् औषधं कण्डूतिं पूर्णतः निवारयितुं न अर्हति। अतः मया पोतकीसेवनं सूचितम् आसीत्। रोगिणः साहाय्यं वैद्यस्य धर्मः खलु? अतः पोतकी केशवाय दत्ता आसीत्। एतत्सर्वं युक्तम् एव अस्ति। वस्तुतः तु अत्र स्थितेषु कस्यापि दोषः नास्ति। अहम् एतस्मिन् ग्रामे वैद्यवृत्तिम् आरब्धवान् यत् तदेव दोषमूलम्" इति उक्तवान् वैद्यः।

"भवान् किमर्थम् एतस्मिन् ग्रामे वैद्यवृत्तिम् आरब्धवान्?" इति पृष्टवान् भूस्वामी।

तदा सीतारामः उक्तवान्– "युक्तः प्रश्नः एषः। तत्र अहं कारणं न। अहं गुरोः सकाशात् वैद्यशास्त्रस्य अध्ययनं कुर्वन् आसम्। तत्समये भवतः पिता शरणनायकः केनचित् कारणेन मम गुरोः समीपम् आगतः गुरुं निवेदितवान् यत् अस्माकं प्रदेशे कोऽपि उत्तमः वैद्यः एव नास्ति इति। तस्मिन् काले एतस्य विमलस्य पिता चन्द्रकान्तः केनचित् व्याधिना पीड्यमानः आसीत्। विमलस्य पितुः चन्द्रकान्तस्य भवतः पितुः च आत्मीयता आसीत् इति ते सर्वैः ज्ञायते एव"।

"आम् आम्। तयोः मैत्री सुप्रसिद्धा। तां




मैत्रीम् इदानीम् अपि अस्माकं ग्रामे बहव उदाहरन्ति" इति सन्तोषेण उक्तवान् भूस्वामी।

"भवान् तत् स्मरति इति तु मम सौभाग्यम्। भवतः पितुः प्रार्थनां पुरस्कुर्वन् मम गुरुः चन्द्रकान्तस्य चिकित्सार्थं माम् एतं ग्रामं प्रति प्रेषितवान्। मम चिकित्सया चन्द्रकान्तवर्यः रोगात् मुक्तः जातः। अत्रैव वैद्यवृत्तिम् अनुवर्तयितुं भवतः पिता चन्द्रकान्तवर्यः च मां सूचितवन्तौ। एवम् अत्र वैद्यवृत्तिः आरब्धा मया। इदानीं दोषः कस्य इति भवान् एव निर्णयतु तावत्" इति उक्तवान् सीतारामः।

"भवतः वचनं न्याय्यम् एव। एवं सर्वस्य

मूलं मम पिता, एतस्य विमलस्य च पिता इति एतावता ज्ञातम्। किन्तु तौ इदानीम् एतस्मिन् लोके न स्तः। तर्हि हानेः परिहारं कः कुर्यात्?" इति स्वसन्देहं प्रकटितवान् भूस्वामी।

"श्रीमन्! न्यायनिर्णये अद्वितीयं पाण्डित्यं भवतः। योग्येन न्यायनिर्णयेन भवतः पिता देशे प्रसिद्धः आसीत्। पितुः योग्यः पुत्रः भवान्। भवता सम्यक् एव उक्तम्। मृताः हानिपरिहारार्थं धनं दातुं न अर्हन्ति" इति मध्ये उक्तवान् केशवः।

तदा सीतारामः उक्तवान्– "श्रीमन्! अत्र भवतः पितुः अपराधः अस्ति इति अहं न भावयामि। मम चिकित्सया विमलस्य पिता स्वस्थः जातः। अतः लाभः तु तेन प्राप्तः। स तु इदानीं नास्ति इत्यतः तेन कृतस्य दोषस्य उत्तरदायी भवति तस्य पुत्रः विमलः एव। अन्यच्च अजापालनं सम्यक् अकुर्वन् एषः एवं समस्याम् उत्पादितवान्। अतः उभयथा अपि वास्तविकः दोषी विमलः एव" इति।

"भवता युक्तम् एव उक्तम्। न्यायनिर्णये बहुधा उपकृतं भवता। अये, विमल! सर्वं श्रुतं खलु? सर्वस्य अपि कारणं भवान् एव। अपराधस्य कारणीभूतः सन् परिहारधनं प्राप्तुम् आगतः। लज्जा न भवति भवतः? इतः परम् एतादृशं कार्यं कृतं चेत् भवन्तं ग्रामात् बहिष्करिष्यामि, स्मरतु। मणिकण्ठः, केशवः च अत्र निरपराधिनौ" इति उक्तवान् भूस्वामी।

"श्रीमन्! मम पोतकी अजया नाशिता। एषा हानिः मया स्वयं निर्वोढव्या आपतिता" इति खेदेन उक्तवान् मणिकण्ठः।

"तदर्थं विंशतिं रूप्यकाणि भवते दास्यति विमलः। अये विमल! श्रुतं खलु? मणिकण्ठाय विंशतिं रूप्यकाणि दत्त्वा गच्छतु। इतः परं जागरूकः भवतु च" इति सूचितवान् भूस्वामी।

विमलः आत्मनः दौर्भाग्यं निन्दन् मणिकण्ठाय विंशतिं रूप्यकाणि दत्त्वा ततः निर्गतवान्।





## विचित्राणि पुष्पाणि

मलेशियादेशे जातिविशेषे जाताः सीताफलवृक्षाः सन्ति। ते इतरे वृक्षाः इव शाखासु न पुष्प्यन्ति। अपि तु तेषां काण्डप्रकाण्डेषु एव पुष्पाणि दृश्यन्ते।

## क्षारमयः तडागः!



डिजिबौटीनामके प्रदेशे स्थिते तडागे अत्यधिक-लवणयुतं जलम् अस्ति। समुद्रजलापेक्षया दशगुणितेन लवणांशेन युक्तं भवति अत्रत्यं जलम्। एतस्मिन् जले मीनाः न जीवन्ति। एषः तडागः समुद्रस्तरस्य अपेक्षया अपि ५१० द्वादशाङ्गुलं यावत् अधः अस्ति। अधःस्थित्या एषः तडागः आफ्रिकामहाद्वीपे अद्वितीयः। प्रपञ्चस्तरे च तृतीयस्थानेन ख्यातः।

## महान् वल्मीकः

आस्ट्रेलियादेशीयाः श्वेतपिपीलिकाः २० द्वादशाङ्गुलोन्नतं, १०० द्वादशाङ्गुलविस्तीर्णं च वल्मीकं निर्मान्ति।





**FIRE ENGINE** (FRICTION)



**SUPER DUMPER** (FRICTION)



**WRECKER** (FRICTION)



**ZAP GUN** (ELECTRONIC)



**HELICOPTER** (WIND-UP)

# SAMMO

In collaboration with Sammo Corporation, S.Korea

**CHANDAMAMA TOYTRONIX**



WOBBIT
Ht: 13.5 inches



JUMBO
Ht: 7 inches



BOW WOW
Ht: 6 inches



PAPA HARE
Ht: 6 inches



TEDDY
Ht. 10.5 inches

# NOW AVAILABLE*

Every toy in the Cuddles Collection is made to the standards set by our collaborators.

High quality synthetic fur used for the stuffing ensures the toys stay cuddly for years. Every Cuddles' fur is made of material with fast colours. The cute little eyes and nose are made of non-toxic plastic and are secured firmly to withstand child-handling.

The Sammo range of mechanical toys too are made to exacting standards set by Sammo Corporation of S. Korea, one of the leading toy manufacturers in the world.

Toys crafted to look like the real thing. With dynamic crackling sounds, glossy, non-fading colours.

Neatly and attractively packed to please the child and the parent.

Every little detail has been taken care of to ensure the child's safety and customer satisfaction.

Whether it is the children who play with Cuddles and the Sammo toys or the parents who buy them, these toys will keep everybody smiling.

*in leading toys shops in Andhra Pradesh, Karnataka, Kerala, Tamil Nadu and Bombay only

**INTRODUCTORY OFFER**

One set of stickers and entry form to the 'CHANDAMAMA CUDDLES-SAMMO Contest' inside every carton.




CUDDLES

In collaboration with Sammo Corporation, S.Korea

**Chandamama Toytronix Private Limited,**
Chandamama Buildings,
188, NSK Salai, Vadapalani, Madras-600 026.

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां अगस्ट्-९० मासे प्रकटयिष्यामः।





* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जून्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिका समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरायमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'एप्रिल्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **हृत्कर्णमधुरः तन्त्रीनादः सम्पादयति अतिमोदम्।**

द्वितीयचित्रम् - **हृद्भेदघोरः पतत्रिवेधः उत्पादयति अतिखेदम्।**

प्रेषकः - श्री कृ. रङ्गस्वामी, ४७, मारियप्पनगरम्, अण्णामलैनगरम्-६०८००२


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

**डाल्टन् एजन्सीस्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी मद्रास्-६०००२६

**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**


---

# AN OPEN CHALLENGE

## TO ALL SKETCH PENS


*Only Sharp Sketch Pens are bigger in diameter.*


*Only Sharp Sketch Pens have bigger and wider filters.*


*Only Sharp Sketch Pens have more ink, so longer life.*

# Sharp®
## Sketch Pens

*Value for money. Nothing less.*




**Bi-Colour Ballpen Co. Pvt. Ltd.**
AB 274/P, 275 Chitra Industrial Estate
G.I.D.C Post Office, BHAVNAGAR – 364 004.

JAISONS SH 490

